# पुरुषोत्तमः ।

मानी–विष्णु–संज्ञकयोर्मातापित्रोर्लब्धजन्मा विष्णुभक्तिकल्पलताप्रणेता पुरुषोत्तमकविः कस्मिन्काले कतमं जनपदमलंचकारेति संदिग्धप्रायम् ।

यदि नामलिङ्गानुशासनपरिशिष्टरूपस्य त्रिकाण्डशेषस्य निर्मातासावेव पुरुषोत्तमः स्यात्तदैते विचाराः प्रादुर्भवन्ति । तथाहि—नानार्थसंग्रहभूमिकायां चतुर्दशे पृष्ठे 'अयं वाङ्गो हलायुधवंश्यः ख्रिस्ताब्दीयत्रयोदशशतकोत्तरार्धान्न चिरंतनः' इति श्रीमदानन्दरामो व्यवस्थापयति ।

महाराष्ट्रभाषानिबद्धकविचरित्राभिधाने ग्रन्थे तु 'अयं च ओरसाक्षत्रियः कलिङ्गदेशस्य राजा शालिवाहनशकाब्दीयचतुर्दशशतके बभूव । कटकाभिधाना चास्य राजधान्यासीत् । अनेन त्रिकाण्डशेषः, हारावली, एकाक्षरकोषः, इति प्रबन्धत्रयी स्वदेशीयपाठालयोपयुक्ता व्यरचि' इत्यादि व्यवस्थापितमास्ते ।

'नोटिसिस् ऑव् संस्कृत म्यान्युस्क्रिप्टस्' संज्ञके सूचीपत्रे 'दशमे एकादशे वा ख्रिस्ताब्दशतके पुरुषोत्तम आसीत्' इति श्रीराजेन्द्रलालमित्रो निश्चिनोति ।

हारावलीसमाप्तौ 'श्रीधृतिसिंहजनमेजययोः समं निरूप्य श्रीधृतिसिंहवाचामाधारेण हारावली निर्मिता' इति पुरुषोत्तमो वक्ति । तथा च पूर्वोक्तत्रिकाण्डशेषादि ग्रन्थावसाने 'पुरुषोत्तमदेवः' इति देवशब्दान्तं नामोपलभ्यते । तेनायं कदाचित्क्षत्रियः स्यात् ।

विष्णुभक्तिकल्पलतायां तु कुत्रापि देवशब्दान्तं पुरुषोत्तमनाम न दृश्यत इत्यपि संदेहावसरः ।

यद्यप्यत्र काव्ये 'हरिणचरणमात्रं–' इत्यादयः कतिपये श्लोकाः सहृदयहृदयान्तरे काममप्यरुचिकणिकामङ्कुरयन्ति तथापि संसारारामविहरन्मनोमृगवागुरायमाणत्वान्न कामं दोषोद्घोषकाः ॥

---

# महीधरः ।

एतट्टीकानिर्माता भट्टतनूभवो महीधरो बाणवेदनृप(१६४५)प्रमे विक्रमवर्षे वाराणस्यामासीदित्यादि सर्वं निम्नलिखितश्लोकेभ्यः स्पष्टं ज्ञायते । तथाहि—

अहिच्छत्रे द्विजच्छत्रं वत्सगोत्रसमुद्भवः ।
आसीद्रत्नाकरो नाम विद्वाञ्जातो धरातले ॥ १२१ ॥
तत्तनूजो रामभक्तः स तु भट्टाभिधोऽभवत् ।
महीधरस्तदुत्पन्नः संसारासारतां विदन् ॥ १२२ ॥
निजं देशं परित्यज्य गतो वाराणसीं पुरीम् ।
सेवमानो नरहरिं तत्र ग्रन्थमिमं व्यधात् ॥ १२३ ॥
विक्रमार्काद्गते वर्षे बाणवेदनृपैर्मिते ।
ज्येष्ठाष्टम्यां शिवस्याग्रे पूर्णो मन्त्रमहोदधिः ॥ १३३ ॥

महीधरस्य कल्याणनामा पुत्र आसीदित्यपि 'कल्याणाभिधपुत्रेण—' इति मन्त्रमहोदधिसमाप्तिश्लोकाज्ज्ञायते । महीधरस्य सर्वस्मिन्नेव ग्रन्थे लक्ष्मीनृसिंहस्मरणरूपं मङ्गलाचरणपद्यं प्रायो वर्तते, तेन मन्त्रमहोदधिप्रणेतृमहीधराद् विष्णुभक्तिकल्पलतानिर्माता कश्चिदन्य इति शङ्काङ्कुरोऽपि नोदेति ।

अद्यावधि ज्ञाता महीधरविरचितग्रन्थास्त्वेते—

(१) विष्णुभक्तिकल्पलताविवरणम् ।
(२) वेददीपनामकं शुक्लयजुर्वेदभाष्यम् ।
(३) मन्त्रमहोदधिः ।
(४) नौका (मन्त्रमहोदधिव्याख्या) ।
(५) मन्त्रनिघण्टुः ।

---

अथास्याः सटीकाया विष्णुभक्तिकल्पलतायाः पुस्तकत्रयं भिन्नमातृकं नातिशुद्धं नातिप्राचीनं लेखनकालविकलमासादितम् । तत्र मूले कुत्रचिदेव पाठभेदो दृश्यत इति विशेषतः पाठक्षोदाय न यतितम् । टीकायां तु प्रायः प्रतिश्लोकव्याख्यं पाठभिदा समुपलभ्यते, कुत्रचिद् विवृतिव्यत्यासोऽपि । किं बहुना विलक्षणेयं टीका ।

हा हन्त तत्तन्निबन्धमणिनिकरनिकषायमाणशेमुषीके महामहोपाध्यायपण्डितश्रीदुर्गाप्रसादे देवसभासभास्तारहीरतां गते द्वित्रमासपर्यन्तममुष्य ग्रन्थस्य वैयाकरणपण्डितश्रीशिवदत्तशर्मणा संपादनमकारीति तस्य महाशयस्याथ शोधनपत्रकर्तुः कविमल्लश्रीहरिवल्लभशर्मणश्चोपकारमुरीकुर्मः ॥

---

# काव्यमाला।



## श्रीपुरुषोत्तमकविप्रणीता
## विष्णुभक्तिकल्पलता।

श्रीमहीधरविरचितया टीकया समेता।

---

प्रथमः स्तबकः।

नृहरिं गिरिजां गिरं गणेशं गुरुपादाब्जयुगं शिवं प्रणम्य।
हरिभक्तिलताभिधेऽत्र काव्ये विवृतिं वच्मि यथामतीशतुष्ट्यै॥

तत्र स्वाभीष्टदेवतावर्णनरूपं विष्णुभक्तिलताख्यं काव्यं चिकीर्षुः प्रारिप्सितग्रन्थनिर्विघ्नपरिसमाप्त्यै शिष्टाचारपरिपालनाय च पुरुषोत्तमः कविराड्विघ्नेशस्मरणलक्षणमाशीरूपं काव्यमुखं वदति। 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इत्युक्तेः।

अतिसुदृढमगातां हर्षमङ्कैकभावा-
दधिकतममुमेशौ यं तथात्म्यैक्ययोगात्।
तदधिकमिव यातौ यं सुतं वीक्षमाणौ
सफलयतु स देवो वः क्रतुं वक्रतुण्डः॥ १॥

उमेशौ भवानीशंकरावङ्कैकभावाद्देहैक्याद‌तिसुदृढं निबिडं यं हर्षं संतोषमगातां प्रापतुः। तथा आत्म्यैक्ययोगादात्मनोरैक्यादधिकतममत्यधिकं हर्षमगाताम्। तथा तस्माद्धर्षाद्यं सुतं वीक्षमाणौ विलोकयन्तौ सन्तौ तदधिकमिव आत्म्यैक्ययोगहर्षादधिकं हर्षं यातौ प्राप्तौ स वक्रतुण्डो गणेशो देवो वो युष्माकं क्रतुं संकल्पं सफलयतु सफलं करोतु। मनोरथसिद्धिं करोत्वित्यर्थः। मालिनीवृत्तम्॥

एवं गणेशं स्मृत्वा भारतीं स्मरति—

स्फटिकमणिमयाक्षस्रक्सुधापूर्णचञ्च-
त्कनककलशवीणापुस्तकान्यादधाना।
सकलविबुधवन्द्या वाङ्मयब्रह्ममूर्ति-
र्मम कमलदलाक्षी देवता संनिधत्ताम्॥ २॥

एवंविधा देवता भारती मम संनिधत्तां संनिधानं सामीप्यं करोतु । कीदृशी । स्फटिकमणिमयी या अक्षस्रक् जपमाला च सुधया अमृतेन पूर्णश्चश्चच्छोभमानः कनककलशो हेमकुम्भश्च वीणा वल्लकी च पुस्तकं च एतान्यादधाना धारयन्ती । मालाकुम्भौ दक्षिणहस्तयोर्वीणापुस्तके वामहस्तयोः । तथा सकलैर्विबुधैर्देवैर्वन्द्या स्तुत्या । वाङ्मयं वाणीरूपं ब्रह्म वेदस्तन्मूर्तिः । वेदरूपेत्यर्थः । कमलदलाक्षी पुण्डरीकपत्रनेत्रा । इत्यनेन प्रसन्नत्वम् । 'प्रसन्ना देवता ध्येया सर्वाभीष्टप्रदायिनी' इत्युक्तेः ॥

एवं सरस्वतीं ध्यात्वा सन्तः स्मरति—

हृदयजलजजाग्रज्ज्योतिरुद्द्योतितान्तः-
करणकिरणरीणाशेषदोषान्धकाराः ।
भवदवविवशानां तन्वते येऽभिषेकं
हरिचरितसुधाभिस्तेऽभिनन्दन्तु सन्तः ॥ ३ ॥

ते सन्तः सत्पुरुषा अभिनन्दन्तु आनन्दं प्राप्नुवन्तु । ते के । ये हरिचरितसुधाभिर्गोविन्दचरित्रामृतैर्भवदवविवशानां संसारदावानलपरितप्तानामभिषेकं तन्वते । हरिचरित्रामृतैः संसारतापं शमयन्तीत्यर्थः । कीदृशास्ते । हृदयजलजे हृत्कमले जाग्रत्प्रकाशमानं यज्ज्योतिर्ब्रह्मतेजस्तेन द्योतितं प्रकाशितं निर्मलितं यदन्तःकरणं तत्किरणै रीणाः क्षीणा अशेषदोषाः कामादय एवान्धकारो येषां ते तादृशाः ॥

एवं मङ्गलं विधाय कर्तव्यं प्रतिजानीते—

अधिजगति जनानामेक एवास्त्युपायो
विषमतमभवाब्धिं तूर्णमेतं तरीतुम् ।
श्रवणमननपूर्वं विष्णुपादारविन्द-
स्मरणमिति तदेतत्प्रोच्यते भक्तिलोभात् ॥ ४ ॥

जगत्यामधि इत्यधिजगति पृथिव्याम् । 'जगती विष्टपे मह्यां वास्तुछन्दोविशेषयोः' इति विश्वः । विभक्त्यर्थेऽव्ययीभावः । विषमतमभवाब्धिमतिदुःसहं संसारसमुद्रं तूर्णं शीघ्रं तरीतुं नराणामेक एवोपायोऽस्ति । को वा तमाह—श्रवणमननपूर्वं विष्णुचरणाम्बुजस्मरणमिति । सर्ववेदान्तवाक्यानामद्वैते वस्तुनि तात्पर्यावधारणं श्रवणम् । युक्तिभिस्तस्यैवानुचिन्तनं मननम् । ते द्वे विधाय हरिस्मरणमिति । तदेतद्भक्तिलोभात्प्रोच्यते कथ्यते ॥

विमलयतु मनो मे दूषितं दोषसंघै-
रहरहरिह रम्या रामचन्द्रस्य भक्तिः ।
सगरतनयभूतिभ्रेषितं भूमिभागं
सुरसरिदिव दोषश्लोषविख्यातशक्तिः ॥ ५ ॥

अहरहः प्रतिदिनं रम्या मनोहरा रामचन्द्रस्य भक्तिर्दोषसंघैः कामादिसमूहैर्दूषितं मम मनो विमलयतु निर्मलं करोतु । तत्र दृष्टान्तमाह—सगरस्य राज्ञः पुत्राणां कपिलकोपाग्निदग्धानां भूत्या भस्मना श्रेषितं दूषितं भूमिभागं सुरसरिद्गङ्गेव । दोषाणां पापानां प्लोषे दाहे विख्याता शक्तिर्यस्याः सेत्युभयोर्विशेषणम् ।।

उपनिषदपि लेभे नैव साक्षाद्यदन्तं
न च वचनमनोभिर्योगिनो जग्मिवांसः ।
शिथिलितभवबन्धा जन्तवो यस्य नाम्ना
हृदि तमभिनिबद्धं राधयाराधयामः ॥ ६ ॥

उपनिषद्वेदान्तोऽपि साक्षाद्यदन्तं यस्य विष्णोर्निर्णयं न लेभे न पर्याप्ता । योगिनः सनकादयोऽपि वाग्भिर्मनोभिश्च यदन्तं न जग्मिवांसो न गताः । गमेः क्वसुः । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतेः । यस्य नाम्ना रामकृष्णेत्याद्युच्चारितेन प्राणिनः शिथिलितभवबन्धाः शिथिलीकृतसंसारजनककर्माणो भवन्ति । राधया गोप्या यद्वा राध्यते आराध्यते अनयेति राधा भक्तिराराधना तया हृदि अभिनिबद्धं मनसायातं तं हरिं वयमाराधयामः ॥

श्रवणविवरमाप्ता सज्जनानां प्रसङ्गा-
दनयदनयवृत्तीनप्यनेकान्दिवं या ।
हृदयविहितवासा मुक्तये कस्य नासा-
वधिभुवनसमर्था[1] जानकीजानिकीर्तिः ॥ ७ ॥

असौ जानकीजानिकीर्तिः । जानकी जाया यस्य सः । जायाया निङ् । रामकीर्तिः हृदयविहितवासा हृदये विहितः कृतो वासो यस्याः सा हृदये स्थापिता सती कस्य मुक्तये न, अपि तु सर्वस्यापि मुक्तये भवेत् । अधिभुवनं त्रिलोकेषु समर्था । मुक्तिं दातुमिति शेषः । या रामकीर्तिः सज्जनानां साधूनां प्रसङ्गात् श्रवणविवरं कर्णमार्गमाप्ता श्रुता सती अनयवृत्तीनन्यायाचारानेकानप्यजामिलादीन् दिवं द्योतमानं वैकुण्ठलोकमनयत्प्रापयत् ॥

अधिहृदयमयं चेद्भाति भर्ता रमाया
विषमभवसमुद्रे साधुसेतुः सतां यः ।
उपनिषदमुदग्रां यष्टिमादाय हस्ते
कलयतु क इवात्रागाधतां तद्भवाब्धेः ॥ ८ ॥

चेद्यदि रमायाः श्रियो भर्ता हरिरधिहृदयं हृदये भाति प्रकाशते । सत्सङ्गादिति शेषः । यो विषमे भवसमुद्रे सतां भक्तानां साधुः समीचीनः सेतुः । तर्हि उपनिषल्लक्षणामुदग्रां

---

१. 'अनर्घा' ख.

यष्टिं हस्ते गृहीत्वा भवाब्धेरगाधतां गम्भीरतां क इव कलयतु जानातु । न कोऽपि । उपनिषदर्थे विचारिते ब्रह्मणि साक्षात्कृते को वा संसाराब्धिरित्यर्थः । यद्वा संसारसमुद्रे श्रीहरिर्यदा सेतुर्जातस्तदोपनिषद्यष्टेः किं प्रयोजनं न किंचिदिति ॥

ननु श्रुतयो बहुधर्मप्रमाणकाः सन्ति कथं हरिरेव साधुसेव्यत्वेनाश्रयणीय इत्यत आह—

श्रुतिभिरतिमिदोक्तौ कौतुकं कुर्वतीभि-
र्हृदय यदयमेवाश्रीयते श्रीनृसिंहः ।
तदिह भवभयस्याभावभव्यं भज त्वं
चरणकमलमस्यापास्य नोपास्यमन्यत् ॥ ९ ॥

हे हृदय, यद्यस्माच्छ्रुतिभिर्वेदैरयमेव श्रीनृसिंह आश्रीयते प्रतिपाद्यते । ननु ताभिः संसारभेदः प्रतिपाद्यते कुतो नृसिंहस्तत्राह—अतिभिदोक्तौ भेदव्याख्याने कौतुकं कुर्वतीभिः । भेदव्याख्यानं कौतुकेन वास्तवं तु हरिप्रतिपादनं श्रुतेः । तत्तस्मादिह संसारेऽस्य हरेश्चरणकमलं त्वं भज सेवस्व । कीदृशम् । भवभयस्य संसारभीतेरभावे नाशे भव्यं कुशलम् । यत एतदपास्य विहायान्यन्नोपास्यं न सेव्यम् ॥

हृदि न यदि नराणां विष्णुपादारविन्द-
स्मरणवशसमुत्थः स्नेहयोगातिरेकः ।
तदितरपरिचर्या जायतेऽर्थाय कस्मै
कतरगुणकृदद्रौ नीरसे नीरसेकः ॥ १० ॥

यदि नराणां हृदि विष्णुपादारविन्दस्मरणवशेनोत्थो यः स्नेहयोगस्तस्यातिरेक आधिक्यं न तर्हि इतरपरिचर्या अन्यसेवा कस्मै अर्थाय जायते । भगवद्भक्तिं विनान्यसेवा अकिंचित्करेत्यर्थः । तत्र दृष्टान्तः—नीरसे शुष्केऽद्रौ नीरसेकः कतरगुणं करोति । न कमपीत्यर्थः ॥

अहो त्वया प्रतिजन्म हर्यनाश्रयणेन दुःखं प्राप्तं तथापि कथं क्षणमात्रमपि स्थिरचित्तेन मुरारिं न स्मरसीत्याह—

अनुजनुरनुभूयाप्यत्र दुःखं दुरात्म-
न्क्षणमपि हृदि रुद्धः शुद्धचित्तेन साक्षात् ।
जलजदलजयश्रीमण्डितोदारनेत्रो
न बत नवतमालश्यामवर्णो मुरारिः ॥ ११ ॥

हे दुरात्मन्, अत्र संसारे अनुजनुः प्रतिजन्म दुःखमाधिव्याधिलक्षणमनुभूयापि क्षणमपि शुद्धचित्तेन निष्कपटमनसा कृत्वा मुरारिर्हृदि बत न रुद्धः । कीदृशः । जलजदलजयिन्या कमलपत्रजयिन्या श्रिया मण्डिते उदारे नेत्रे यस्य । तथा नूतनतमाल इव श्यामो वर्णो यस्य स तथा । बतेति खेदे ॥

ननु संसारभयत्रासेन विह्वलतया कथं हर्याश्रयणं भवति तत्राह—

भवपवनवयस्यानल्पसंकल्पकीला-
विलसितकृततापप्रौढिमानं निरीक्ष्य ।
त्यज हृदय विषादं मा गमः कातरत्वं
तव नवजलदश्री रक्षिता रामचन्द्रः ॥ १२ ॥

भवः संसार एव पवनवयस्यो वायुसखोऽग्निस्तस्यानल्पा बहवः संकल्पाः कामा एव कीला ज्वालाः । 'वह्नेर्द्वयोर्ज्वालकीलौ' इत्यमरः । तासां विलसितेन प्रसरणेन कृतो यस्तापस्तस्य प्रौढिमानं भूयस्त्वं निरीक्ष्योत्पन्नं विषादं हे हृदय, त्यज । कातरत्वमधैर्यं च मा गमः । यतो नवजलदश्रीर्नूतनमेघश्यामो रामचन्द्रस्तव रक्षितास्ति । तमाश्रयेत्यर्थः ॥

नन्वन्तकाले नरकत्रासः कथं गच्छतीति चेत्तत्राह—

मनसि यदि मुकुन्दः कं दरं मन्द रम्ये-
तरनरकततेस्त्वच्चिन्तयस्यन्तकाले ।
हरिचरणसरोजे जाग्रती याग्रतीर्थे
कलिकलुषमशेषं स्वर्धुनी ते धुनीते ॥ १३ ॥

हे मन्द मूर्ख, यदि ते मनसि मुकुन्दो हरिरस्ति तर्हि रम्येतरनरकततेरतिदुःखदायिनिरयौघादन्तकाले कं दरं त्रासं चिन्तयसि । कमपि मा चिन्तयेत्यर्थः । कुतस्तत्राह— हरिचरणाम्बुजे जाग्रती शोभमाना अग्रतीर्थे सकलतीर्थमुख्यभूता या स्वर्धुनी गङ्गा ते तवाशेषं सकलं कलिकलुषं पापं धुनीते नाशयति । पापोऽपि पापान्निवृत्तो मुकुन्दं स्मरन्नरकं नैतीत्यर्थः ॥

ननु प्रायश्चित्तं विना कथं पापक्षयस्तत्राह—

चिरममरतरङ्गिण्यादिसत्तीर्थसेवा-
व्रतनियमजपा वा ये च दत्तप्रभावाः ।
न च सकलसमृद्ध्या साधिता बाधितारः
स्मरणसुकृतलक्ष्मीमध्वरा मध्वरातेः ॥ १४ ॥

चिरकालं गङ्गादि सतां तीर्थानां सेवा व्रतानि प्रायश्चित्तानि नियमाः स्नानसंध्यादयः जपा मन्त्रादीनां सकलसमृद्ध्या बहुधनेन साधिताः संपादिता अध्वरा यज्ञा एते दत्तप्रभावाः दत्तः प्रभावः फलं यैस्ते ईदृशा अपि मध्वरातेर्मधुसूदनस्य स्मरणसुकृतलक्ष्मीं स्मरणोत्थपुण्यशोभां न बाधितारो न जेतारः । हरिस्मरणतुल्यं पुण्यं नास्तीत्यर्थः ॥

यस्मादेवं तस्मात्सर्वस्मरणं विहाय हरिमेव सेवस्वेत्याह—

श्रय हृदय रमायाः कान्तमन्यत्र मा या
न धनतनयजायाः श्रेयसां संप्रदायाः ।

व्यवहृतिमदुपायाः सर्वशस्तेऽन्तरायाः
शमनशयगतं को रक्षिता त्वामपायात् ॥ १५ ॥

हे हृदय, रमाया लक्ष्म्याः कान्तं हरिं श्रय सेवस्व । अन्यत्र मा याः मा गच्छेः । यातेर्लुङ् । ननु धनादयः कथं त्याज्यास्तत्राह—धनपुत्रकलत्राणि श्रेयसां कल्याणानां संप्रदाया मार्गा न भवन्ति । दुःखालयभूतानीत्यर्थः । ननु तर्हि व्यवहारः कथं त्याज्यस्तत्राह—व्यवहृतिमति व्यवहारयुक्ते संसारे तस्य वा ये उपायास्ते सर्वशः सर्वप्रकारैरन्तराया विघ्ना एव । ननु एते सर्वे केन दोषेण त्याज्या इत्याह—शमनशयगतमिति । 'शमनो यमराड्यमः' इत्यमरः । शयो हस्तः । यमहस्तगतं त्वामपायान्नरकदुःखात्को रक्षिता । न कोऽपि हरिं विनेत्यर्थः ॥

शिथिलय भवजालं चिन्तयानन्तयालं
श्रय हृदय दयालुं केवलं नन्दबालम् ।
न विधिविदितपारं संहृतक्षोणिभारं
निखिलनिगमसारं ब्रह्म यन्निर्विकारम् ॥ १६ ॥

हे हृदय, भवजालं संसारबन्धं शिथिलय श्लथं कुरु । अनन्तया बह्व्या चिन्तया अलम् । चिन्ता न कर्तव्येत्यर्थः । केवलं नन्दबालं श्रय आश्रय । कीदृशम् । दयालुं दयावन्तम् । न विधिना ब्रह्मणा विदितः पारो यस्य तम् । संहृतो भूभारो येन तम् । निखिलनिगमसारं सर्ववेदान्तोपनिषत्प्रतिपाद्यम् । यन्निर्विकारं मायातीतं ब्रह्मैव तं श्रय ॥

वसतिरसति विष्णुध्यानयोगे नराणा-
मपि सुकृतपराणामस्ति गर्भे जनन्याः ।
हृदि भज तदजस्रं निर्मले कर्मलेप-
व्यपनयननिमित्तं तं पतंगेन्द्रकेतुम् ॥ १७ ॥

सुकृतपराणां पुण्यवतामपि नराणां विष्णुध्यानयोगे हरिस्मरणे असत्यविद्यमाने सति जनन्या गर्भे वसतिर्निवासोऽस्ति । तत्तस्मात् हे नर, निर्मले हृदि तं पतंगेन्द्रकेतुं गरुडध्वजमजस्रं निरन्तरं त्वं भज । कर्मलेपस्य कर्मसंबन्धस्य व्यपनयने निराकरणे निमित्तं हेतुभूतम् ॥

त्रिचतुरदिवसान्तर्धानवानेव मृत्यु-
र्नरकभयविमुक्तो विद्यते कोऽत्र जन्तुः ।
हृदि तदिह न किं स स्मर्यते कंसशत्रुः
स्मरणमपि यदीयं योगयागातिगामि ॥ १८ ॥

१. 'निरय' क.

त्रयश्चत्वारो वा त्रिचतुराः। अचतुरेत्यादिना निपातः। दिवसा अन्तर्धानं यस्यास्तीति त्रिचतुरदिवसान्तर्धानवान् अल्पदिवसानन्तरमेवागामी मृत्युः। तर्हि का क्षतिस्तत्राह— अत्र संसारे नरकभयहीनः को जन्तुः। न कोऽपि विद्यते। तत्तस्मादिह संसारे स कंस-शत्रुर्हरिर्हृदि किं न स्मर्यते। किं तत्स्मरणेन तत्राह—यदीयं स्मरणं योगोऽष्टाङ्गो या-गोऽश्वमेधादि तावतिगच्छति। योगयागाभ्यामुत्कृष्टफलमित्यर्थः॥

रसवदपि समस्तं पश्य संसारवृक्षा-
त्फलमविरलदोषं यच्च भूतं भविष्यत्।
व्रजति परिमलायोत्कण्ठिता कं प्रमोदं
मिलितमलितरुण्या पद्ममासाद्य नासा॥ १९॥
भवफणिमणिनारीनेत्रनिध्यानमूर्छ-
ज्जनमनसि न सिद्धिर्यस्य सेवां विहाय।
अयि स हृदि न कस्मात्पन्नगारातिकेतु-
र्भवजलनिधिसेतुः स्मर्यते मुक्तिहेतुः॥ २०॥ (युग्मम्)

संसारवृक्षाद्यद्भूतं जातं भविष्यच्च फलं कान्ताकनकादिकं तत्समस्तं रसवत्स्वादुतर-मपि अविरलदोषं बहुदोषयुक्तं पश्य विचारय। तत्र दृष्टान्तः—नासा नासिका परिम-लाय गन्धग्रहणायोत्कण्ठिता सती अलितरुण्या भ्रमर्या मिलितं पद्मं प्राप्य कं प्रमोदं हर्षं व्रजति प्राप्नोति। न कमपि। पुनर्भ्रमर्या दष्टा दुःखमेवाप्नोति। तथा संसारसुखासक्तिरिति भावः॥ भवः संसार एव फणी सर्पस्तस्य मणिस्थानीया नारी तस्या नेत्रनिध्यानं चक्षु-रवलोकनं तेन मूर्छन्मुह्यज्जनमनो नरान्तःकरणं तत्र यस्य हरेः सेवां विहाय सिद्धिर्नास्ति। अयीति कोमलामन्त्रणे। हे जीव, हृदि गरुडध्वजो भवाब्धितारको मुक्तिकारणं स हरिः कस्मान्न स्मर्यते॥

हरिणचरणमात्रं कामिनीनां प्रतीकं
कमपि कलयतस्ते कोटयोऽगुर्युगानाम्।
परिणतिरसवत्ता तत्र नैवानुभूता
प्रथमपदमितस्तद्धेहि मुक्त्वा णमाद्यम्॥ २१॥

मृगपदप्रमाणं नारीणां प्रतीकं 'अङ्गं प्रतीकोऽवयवोऽपघनः' इत्यमरोक्तेः। अङ्गं यो-न्याख्यं कमप्यनिर्वाच्यं कलयतो ध्यायतस्ते तव युगानां कोटयोऽगुर्गताः। युगकोटि-मितकालानुभवेनापि तत्राङ्गे परिणतिरसवत्ता परिपाकस्वादुता नानुभूता। नालंबुद्धिर्जा-तेत्यर्थः। तत्तस्मादितोऽस्मिञ्श्लोके आद्यं णं णकारं हरिणचरणेति णकारद्वयमध्ये प्रथमं णं मुक्त्वा प्रथमं पदं श्लोकस्याद्यं पदं हरिचरणमात्रं पदं धेहि चित्ते धारय। दधातेर्लोटि 'घ्वसोरेद्धावभ्यासलोपश्च' इत्यभ्यासलोप एकारश्च॥

शमयति भवतन्द्रामस्य नामामृतं द्रा-

गपि न रसनसक्तं कस्य नोद्दामशक्ति ।

किमु न कमनमेनं मानसे तद्रमायाः

श्रयसि पयसि सुप्तं लीलया दुग्धसिन्धोः ॥ २२ ॥

अस्य हरेर्नामामृतं द्रागपि मनागपि । ईषदपीति यावत् । रसनसक्तं जिह्वालग्नं सत्कस्य भवतन्द्रां संसारनिद्रां न शमयति । यत उद्दामशक्ति दृढसामर्थ्यम् । तस्माद्दुग्धसिन्धोः पयसि लीलया सुप्तमेनं रमायाः कमनं कान्तं मानसे किमु न श्रयसि किमिति न सेवसे । अपि तु सेवस्वेत्यर्थः ॥

दधति मुदमुदारां नाकिवृन्दे नभःस्थे

निखिलनृपनृशंसे कम्पमाने च कंसे ।

सह सबलभुजैस्तैर्दानवै रङ्गवाटे

रमितममितशक्तेर्यस्य वक्तुं न शक्यम् ॥ २३ ॥

तमिह किमु रमाया वल्लभं मल्लभङ्गो-

त्सवभवदवलेपोत्पत्तिजेतारमन्तः ।

स्मरसि न विनयानुस्यूतसूक्तामृतौघैः

स्तुतमतुल्यशोभिः शोभिवृन्दैः सुराणाम् ॥ २४ ॥ (युग्मम्)

अमितशक्तेर्बहुसामर्थ्यस्य यस्य हरेः सकलभुजैर्बलवद्बाहुभिस्तैः प्रसिद्धैश्चाणूरादिभिर्दानवैः सह रङ्गवाटे मल्लरङ्गे रमितं क्रीडितं वक्तुं न शक्यम् । क्व सति, नभःस्थे आकाशगते नाकिवृन्दे देवसमूहे उदारां महतीं मुदं हर्षं दधति सति । तथा निखिलनृपनृशंसे सकलराजघातुके कंसे कम्पमाने सति ॥ इह संसारे तं रमाया वल्लभमन्तश्चित्ते किं न स्मरसि । कीदृशम् । मल्लानां भङ्गेनोत्सवस्तस्माद्भवन्ती यावलेपोत्पत्तिर्गर्वोत्पत्तिस्तस्या जेतारम् । मल्लभङ्गे नापि गर्वहीनम् । तथा अतुलयशोभिर्निरुपमयशोन्वितैः सुराणां शोभिवृन्दैः शोभमानसमूहैः कर्तृभिर्विनयेनानुस्यूताः संबद्धा ये सूक्तामृतौघाः सुवचनसुधासमूहास्तैः स्तुतम् ॥

सुकृतमकृत किं किं चित्रमासर्गकाला-

दहह सपरिवारो नन्दगोपश्च नैनः ।

इति विहितहितश्रि प्रत्तमुक्त्यच्युत त्वां

फलमलभत यस्माद्बन्धुरं बन्धुरत्नम् ॥ २५ ॥

अह हेत्याश्चर्ये । सपरिवारो नन्दगोप आसर्गकालात्सृष्टिकालमारभ्य चित्रमाश्चर्यकारि

किं किं सुकृतं पुण्यमकृत । एनः पापं च नाकृत । हे अच्युत, विहिते हितश्रियौ येन तत् हितकारि संपद्दात्ट । प्रत्ता दत्ता अर्थाद्भक्तानां मुक्तिर्येन तन्मुक्तिदम् । बन्धुरं मनोहरं त्वां बन्धुरत्नं त्वल्लक्षणं बान्धवश्रेष्ठं फलं यतोऽलभत प्राप । पुण्यं विना हरिपितृत्वं नन्दस्य कथं स्यादिति नानाजन्मगतं पुण्यं नन्दस्यानुमीयत इत्यर्थः ॥

विधिरतनुत मर्त्यान्मुक्तिमार्गोपरोधो-
द्धुरतररजसादौ तेन मे राजसीयम् ।
स्फुरदमरसरित्त्वत्पादपद्मावगाहा-
द्भवतु हृदयवृत्तिर्नीरजा नीरजाक्ष ॥ २६ ॥

विधिर्ब्रह्मा मर्त्यान्मनुष्यान्मुक्तिमार्गस्योपरोधे प्रतिबन्धे उद्धुरतरं समर्थतरं यद्रजो रजोगुणस्तेन सृष्ट्यादावतनुतासृजत् । तेन रजोगुणसृष्टत्वेन राजसी रजोगुणप्रधाना मम हृदयवृत्तिर्हे नीरजाक्ष कमलनेत्र, स्फुरन्ती अमरसरिद्गङ्गा यस्मिन्नेवंविधस्य त्वत्पादपद्मस्यावगाहान्नीरजा निर्मला भवतु । रजस्वलं जलावगाहान्निर्मलं भवति तथा त्वच्चरणाम्ब्वावगाहान्निर्मला भवतु ॥

यदहमदहमुक्त्यानिष्टया हृज्जनानां
चकर च करपातं यत्परस्वे प्रमत्तः ।
श्रुतिपथपथिको यन्नाभवं तन्मुरारे
मम समभिसहस्वादीनवं दीनबन्धो ॥ २७ ॥

अनिष्टयोक्त्या अप्रियवचनेन जनानां हृच्चित्तमहं यददहं दग्धवानस्मि । यच्च प्रमत्तोऽनवहितोऽहं परस्वे परधने करपातं हस्तसंचारं चकर कृतवानस्मि । 'णलुत्तमो वा' इति वृद्ध्यभावे गुणः । यच्च श्रुतिपथपथिको वेदमार्गचारी नाभवं न भूतः हे मुरारे दीनबन्धो, मम तमादीनवं दोषं समभिसहस्व क्षमस्व । दोष आदीनवो मतः ॥

भवजलनिधिमध्ये हर्षसंघर्षतर्ष-
प्रमुषि विषमवीचिव्याकुलं वीक्ष्य विष्णो ।
चरणकमलनावं भावगम्यां मुनीन्द्रै-
रपि सदय तया मे यच्छ यच्छ प्रसीद ॥ २८ ॥

संसारसमुद्रमध्ये हर्षः संतोषः संघर्षः स्पर्धा तर्षस्तृष्णा तत्प्रमुखास्तदादयो या विषमा वीचय ऊर्मयस्तैर्व्याकुलं मां वीक्ष्य हे विष्णो, मुनीन्द्रैरपि भावगम्यां चरणकमललक्षणां नावं सदयतया मे यच्छ यच्छ देहि । प्रसीद । समुद्रे मज्जता नौरेव तारिका ॥

स्फुरितसरितमातन्वानमानन्दमुच्चैः
सपदि सुपदपद्मं प्राप्य कृष्ण त्वदीयम् ।

दुरितभरितमेतन्मामकं देव चेतो
विमलितमलमस्तु प्रस्तुतत्वत्सपर्यम् ॥ २९ ॥

स्फुरिता सरिद्गङ्गा यस्मिंस्तम् । उच्चैरतिशयेनानन्दमातन्वानं विस्तारयन्तम् । हे कृष्ण हे देव, त्वदीयं शोभनं पादपद्मं प्राप्य सपद्येतन्मामकं दुरितभरितं पापाक्रान्तं चेतः प्रस्तुता उपक्रान्ता प्रारब्धा इति यावत् । त्वत्सपर्या तव पूजा येन तादृशं सद्विमलितमस्तु निर्मलं भवतु ॥

दमय मम यतीन्द्रध्येय चेतः प्रभूता-
पदमपि यदवेत्य प्रेत्य दुर्गत्यवस्थाम् ।
सरभसमसदुच्चैराचरन्नैति भीतिं
तदव यदवलम्बः संसृतौ न त्वदन्यः ॥ ३० ॥

हे यतीन्द्रध्येय सनकाद्यैश्चिन्तनीय, मम चेतो दमय । यद्यस्मादसद् दुष्टमाचरन्नपि नरः प्रेत्य मृत्वा प्रभूतापदं बहुविपद्युक्तामपि दुर्गत्यवस्थां नरकयातनामप्यवेत्य ज्ञात्वापि भीतिं न प्राप्नोति । दुष्टाचारो नरकभयं श्रुत्वा न बिभेतीत्यर्थः । तत्तस्मादव रक्ष । यतः संसृतौ संसारे त्वदन्योऽवलम्ब आश्रयो नास्ति ॥

त्वदपि भुवनमध्ये को वदान्यो वदान्यो
नहि परपरिलभ्यं देव विश्वंभरत्वम् ।
इदमहमभियाचे तद्विहाय त्वदङ्घ्री
क्वचन चरतु चेतो मामकं मा मुकुन्द ॥ ३१ ॥

हे मुकुन्द, भुवनमध्ये त्रिलोक्यां त्वत् अन्यो वदान्यः कः त्वं वद । वाक्यार्थस्य कर्मत्वम् । 'प्रियवाग्दानशीलश्च वदान्यः परिकीर्तितः' । हे देव, विश्वंभरत्वं परपरिलभ्यमन्यप्राप्यं नहि । तत्तस्मादहमिदमभियाचे मामकं चेतस्त्वदङ्घ्री विहाय क्वचन मा चरतु मा यातु । अपि तु त्वच्चरणयोरेव यात्वित्यर्थः ॥

शमय मम यमस्य त्रासमत्रासमाना-
पदि सपदि हृदि त्वं कृष्ण तिष्ठन्निमेषम् ।
जगति न गतिरन्या त्वां विना क्वापि धन्या
प्रभवति भवतिग्माभीलनिर्मीलनाय ॥ ३२ ॥

हे कृष्ण, असमानापदि अनुपमपीडेऽत्रास्मिन्मम हृदि सपदि निमेषं तिष्ठन् यमस्य त्रासं शमय । यतो जगति भवतिग्माभीलनिर्मीलनाय संसारस्य तीव्रभयोन्मूलनाय त्वां विना अन्या धन्या श्रेष्ठा गतिरुपायो न प्रभवति न समर्थो भवति । प्रभवनशीलो न भवतीत्यर्थः ॥

अव भवदवदौःस्थ्यादिन्दिरालोचनेन्दी-
वरमधुरतरश्रीसङ्गरङ्गद्दृगंशम् ।
मयि सदय निधायानन्त यद्योगजाग्र-
न्मुदतिशयवशात्मा न स्मराम्येव किंचित् ॥ ३३ ॥

हे सदय, हे अनन्त, इन्दिराया लक्ष्म्या लोचनेन्दीवरस्य नेत्रकमलस्य मधुरतरा रम्या या श्रीः शोभा तस्याः सङ्गेन रङ्गन् क्रीडन् यो दृगंशः कटाक्षस्तं मयि निधाय भवदवदौः-स्थ्यात्संसारदावानलदुःखादव रक्ष । यद्यतोऽनेन योगेन यद्वा दृगंशेन जाग्रत्स्फुरन्यो मुदतिशयो हर्षवेगस्तद्वशात्मा सन् किंचिन्न स्मराम्येव ॥

सततमहितहेतुं हन्तु हन्तुर्मधोर्वः
सकलसुकृतसारः पादपद्मोपचारः ।
भवति हृदयशुद्ध्या मानवो यद्विधाना-
द्दलितदुरितभारः प्राप्तसंसारपारः ॥ ३४ ॥

सकलसुकृतानां मध्ये सारभूतो मधोर्हन्तुर्मुरारेः पादपद्मोपचारश्चरणाब्जसेवनं सततं वो युष्माकमहितहेतुं दुःखकारणीभूतं पापं हन्तु नाशयतु । चित्तशुद्ध्या यद्विधानाद्यस्य पाद-पद्मोपचारस्य विधानान्मानवो दलितदुरितभारो नष्टपापपुञ्जः सन्प्राप्तसंसारपारो भवति ॥

मधुरिपुपदलग्नं चित्तमार्यस्य हर्तुं
कथमपि न समर्था दस्यवो दर्पकाद्याः ।
सुमतिबलिविमुक्तं शक्नुवन्ति प्रमार्ष्टुं
किमु हरिकरमध्याद्दानवा दानवारि ॥ ३५ ॥

दर्पकाद्याः कामाद्या दस्यवो वैरिण आर्यस्य पुण्यवतो मधुरिपुपदलग्नं हरिपदसक्तं चित्तं हर्तुं कथमपि न समर्थाः । 'कंदर्पो दर्पकोऽनङ्गः' इत्यमरः । तत्र दृष्टान्तमाह—शोभन-मतिर्यो बलिस्तेन विमुक्तं दानवारि दानोदकं हरिकरमध्याद्दानवाः किं प्रमार्ष्टुं निराकर्तुं शक्नुवन्ति । स्मेति शेषः । वामनहस्ताद्दानोदकं बलिदत्तं यथा दैत्या नापहर्तुं शक्ता इत्यर्थः॥

दशशतदलपद्मं यस्य तच्छत्रमुच्चै-
र्वरचमरमहेला पिङ्गलेला च पुण्या ।
अनपरपरिमुक्तं भाति भद्रासनं स-
द्धृदयकमलमेकं सार्वभौमः स जीयात् ॥ ३६ ॥

-तत्प्रसिद्धं द्वादशान्तःस्थं सहस्रदलपद्मं यस्योच्चैश्छत्रम् । पुण्या पवित्रा इला पिङ्गला च नाडी वरचमरमहेला चामरधारिणी स्त्री । 'अबला महेला ललना' इति कोषः । अनन्य-

भुक्तं सच्छ्लेषं हृदयकमलमेकं यस्य सिंहासनं भाति स सार्वभौमश्चक्रवर्ती जीयात् सर्वोत्कर्षेण वर्तताम् ॥

सुरभिखुरभिदाभृद्भूतलोद्भूतधूली-
धरममरमहेलामोहबाहुल्यहेतुम् ।
अमृतकरमुखीनां वल्लभो वल्लवीनां
दधदवतु वपुर्वः कायभाजामपूर्वः ॥ ३७ ॥

सुरभीणां धेनूनां खुरैर्भिदां बिभर्ति एतादृशं यद्भूतलं तस्मादुद्धता या धूली तद्धारकम् । अमरमहेलानां स्वर्गस्त्रीणां मोहबाहुल्ये हेतुभूतं वपुर्दधत् । अमृतकरमुखीनां चन्द्रवदनानां वल्लवीनां गोपीनां वल्लभः । कायभाजां शरीरिणामपूर्वो मुख्यो हरिर्वो युष्मानव्याद्रक्षतु ॥

नयनकमलयुग्मच्छत्रमृद्यत्र नासा
करनखरमरीचिप्रस्फुरच्चामरश्रीः ।
अधरमधुरतायाः सार्वभौमो मुरारे-
र्जगति जयति वंशो विश्वविश्वैकवन्द्यः ॥ ३८ ॥

यत्र वंशे नासादण्डो नयनकमलयुग्ममेव च्छत्रं बिभर्ति तादृशः । हस्तनखानां मरीचयः किरणा एव प्रस्फुरन्ती चामरश्रीर्यस्य स विश्वं सर्वं यद्विश्वं जगत्तस्यैकवन्द्योऽसाधारणस्तुल्योऽधरमधुरताया ओष्ठमाधुर्यस्य सार्वभौमो राजा माधुर्यग्राहको मुरारेर्वंशो जगति भूतले जयति सर्वोत्कर्षेण वर्तते ॥

चरणकमललीला बालगोपालमूर्ते-
र्जयति रुचिभिरिभ्या निर्भराभ्यासलभ्या ।
शकटतनुमनूनं वज्रतः कर्कशत्वा-
च्छतशकलमकार्षीद्या सुमृद्वी सुरारिम् ॥ ३९ ॥

इति श्रीपुरुषोत्तमकृतायां विष्णुभक्तिकल्पलतायां भक्त्युद्भावनो नाम प्रथमः स्तबकः ।

बालगोपालमूर्तेः पादपद्मलीला अत्यन्ताभ्यासप्राप्या कान्तिभिरिभ्या आढ्या जयति सर्वोत्कर्षेण वर्तते सुतरां मृद्वी कोमला । या कर्कशत्वात्काठिन्येन वज्रतो वज्रादनूनं वज्रसदृशं शकटतनुं शकटशरीरं सुरारिं दैत्यं शतशकलं शतखण्डमकार्षीत्कृतवती । करोतेर्लुङि रूपम् । 'शकटासुरभञ्जनः' इति पुराणात् ॥

इति श्रीमहीधरविरचिते विष्णुभक्तिकल्पलताविवरणे भक्त्युद्भवो नाम प्रथमः स्तबकः ।

---

द्वितीयः स्तबकः ।

अव्यादवाङ्मनसगोचररूपशीला
लीलावती यतिहृदम्बुजराजहंसी ।

एषा ललाटफलकार्पितचन्द्रलेखा
शेषाहिशायिभगिनी दुरितादशेषात् ॥ १ ॥

वाक्च मनश्च तयोरगोचरमविषयं रूपं स्वरूपं शीलयति धारयति तादृशी । लीलायुक्ता । यतीनां हृत्कमले राजहंसी । ललाटतटेऽर्पिता चन्द्रलेखा यया सा । शेषनागशायिनो हरेर्भगिनी दुर्गा अशेषात्समग्राद्दुरितात्पातकादव्याद्रक्षतु । 'नन्दगोपकुले जाता' इति मार्कण्डेयोक्तेः । वसन्ततिलकावृत्तम् ॥

यन्निमेषमपि रे वृषं विना वर्तसे मिथुनभावतोषितः ।
कर्कशत्वमिदमात्मनि स्फुटं पश्य सिंहमिव मृत्युमुद्धतम् ॥ २ ॥

रे जन्तो, निमेषमपि मिथुनभावेन स्त्रीसंयोगेन तोषितः सन्यद्वृषं विना धर्महीनो वर्तसे इदं धर्महीनत्वमात्मनि स्वस्मिन्कर्कशत्वं स्वस्यैव दुःखदायित्वं स्फुटम् । यत उद्धतं सिंहमिव मृत्युं पश्य । रथोद्धतावृत्तम् । 'रान्नराविह रथोद्धता लगौ' इत्युक्तेः ॥

कन्यकावसुतुलादिदानतो यद्यसह्यभववृश्चिकव्यथा ।
नैव शाम्यति ततो बलिष्ठया रामनामसुधयास्व सुस्थितः ॥ ३ ॥

यदि यतः कन्याकनकतुलादिदानेनाप्यसह्या संसाररूपवृश्चिकपीडा नैव शाम्यति ततो बलवत्या रामनामरूपया सुधया सुस्थितः सुखी आस्व तिष्ठ । आस्तेर्लोटि मध्यमैकवचनम् ॥

रामनामधनुषा भवाभिधं भिन्द्धि रे मकरमन्यथात्मकम् ।
कुम्भमध्यगतमीनवद्दशामेति कामिह न हाग्रहाकुलः ॥ ४ ॥

रे जन्तो, अन्यथात्मकं मिथ्यास्वरूपं स्वप्नप्रायं भवाभिधं संसाररूपं मकरं ग्राहं रामनामरूपेण धनुषा भिन्द्धि विदारय । ह स्फुटं इहाग्रहेण संसाराग्रहेणासक्त्या आकुलो व्यग्रः कुम्भमध्यगतमीनतुल्यां कां दशामवस्थां नैति न प्राप्नोति । दुःखमेवानुभवतीत्यर्थः ॥

अस्तमेति दिवसात्यये रविश्चन्द्रमा अपि विशेषतः क्षयी ।
मङ्गलोपरि मनः कयाशया तत्करोति जगतीतले बुधः ॥ ५ ॥

रविर्दिवसान्तेऽस्तं याति । चन्द्रोऽपि विशेषतः क्षयवान् । चन्द्रसूर्ययोरपि विपदं दृष्ट्वा बुधो ज्ञानी जगतीतले मङ्गलोपरि कल्याणाप्तौ कया तृष्णया मनः करोति । न किंचिदपि साध्यमित्यर्थः ॥

जीव पीवरमथेतरद्वपुः शुक्रशोणितसमुद्भवं सदा ।
प्राप्यमेव हि परं शनैश्चरभ्रातृदूतभयभेषजं भज ॥ ६ ॥

हे जीव जन्तो, पीवरं स्थूलं हस्त्यादिकमथेतरत्सूक्ष्मं मशकादिकं वपुः शुक्रशोणितजातं सदा प्राप्यमेव । हि यतः । अतः परं केवलं शनैश्चरभ्रातुर्यमस्य दूतेभ्यो यद्भयं तस्य भेषजं निवर्तकं हरिं भज सेवस्व ॥

राहुणेव यदि रोहिणीपतिर्गृह्यसे नहि लुलायकेतुना ।
तावदेव कुरु यत्नमच्युताराधने धनधियं धिगन्ध ते ॥ ७ ॥

राहुणा चन्द्र इव लुलायकेतुना महिषध्वजेन यमेन यावन्न गृह्यसे । 'प्रसये' इति वा पाठः । तावदेवाच्युताराधने हरिभजने यत्नं कुरु । हे अन्ध, ते तव धनधियं धनबुद्धिं धिक् । तां मा कार्षीरित्यर्थः ॥

अष्टमी भव तनुर्महेशितुः कैटभारियजनाय यत्नतः ।
यौवनेऽसि नवमीनकेतनः किं त्वमत्र दशमी करिष्यसि ॥ ८ ॥

हे जन्तो, यत्नतः कैटभारेर्हरेर्यजनाय महेशितुः शिवस्याष्टमी तनुर्दीक्षितो भव । 'पञ्चभूतानि सोमार्कौ यज्वेत्यष्टाजमूर्तयः' इत्युक्तेः । 'भूतेन्दुसूर्ययज्वानः शंकरस्याष्टमूर्तयः' इति च । यौवने नवो नूतनो मीनकेतनः कामो यस्येदृशोऽसि । अत्र संसारे दशमी वृद्धः सन्किं करिष्यसि । 'वर्षीयान्दशमी ज्यायान्' इत्यमरः । दशमोऽवस्थाविशेषो यस्येति क्षीरस्वामी । जरायां शरीरासामर्थ्यान्न किमपि कर्तुं शक्यतेऽतस्तत्पूर्वमेव हरिभजने यत्नं कुर्वित्यर्थः ।

अय्यनेकविधवेदनाकुले मातृकुक्षिकुहरे कृतौकसः ।
आमनस्यमपि ते मनस्यहो न प्रकाशमुपयाति किं नु तत् ॥ ९ ॥

अयीति संबोधने । हे जन्तो, अनेकविधाभिर्वेदनाभिराकुले व्याप्ते मातृकुक्षिकुहरे जननीजठरविवरे कृतौकसो विहितनिवासस्यापि ते तव मनस्यामनस्यं प्रसवजनितं दुःखं प्रकाशं नोपयाति न स्फुरति । अहो आश्चर्यं किं नु तत् । 'आमनस्यं प्रसूतिजम्' इत्यमरः ।

बुद्धिरस्ति यदि विष्णुयोगिनी तद्भयं किमिह कालपाशतः ।
मेरुमौलिरमरापगाप्लुवो दह्यते किमु दवेन वह्निना ॥ १० ॥

यदि बुद्धिर्विष्णुयोगिनी हरियुक्तास्ति तर्हि इह संसारे कालपाशतो भयं यमयातनाभीतिः किम् । न किमपीत्यर्थः । दृष्टान्तमाह—अमरापगाया गङ्गाया आप्लवः प्रवाहो यस्मिन्नीदृशो मेरुमौलिर्दवेन वह्निना दावानलेन किमु दह्यते । नेत्यर्थः ॥

सिद्धिरस्ति सुकृतानुसारतः सारतर्कसुहृदेष निर्णयः ।
अर्जितव्यमनिशं यशोधनं शोधनं यदखिलापराधतः ॥ ११ ॥

सुकृतस्य पुण्यस्यानुसारेण सिद्धिरस्तीत्येष निर्णयः सिद्धान्तः सारतर्कसुहृत्समीचीनस्य तर्कस्य सहायः । अनुसारीत्यर्थः । तत्स्वरूपमाह—यत्समग्राणामपराधानां शोधनं नाशनं तद्यशोलक्षणं धनमनिशं निरन्तरमर्जितव्यम् । सुकृतेनैव यशो भवतीत्यर्थः ॥

अर्जुनीयति यदर्जने जनो वर्जनीयजनसेवनादिभिः ।
मङ्क्षु नश्यति चिराय संचिता वञ्चिता जगति के न संपदा ॥ १२ ॥

यदर्जने यस्याः संपदोऽर्जुने वर्जनीयानां कुत्सितानां जनानां सेवनादिभिर्जनोऽर्जुनीयति तृणतुल्यो भवति। कुत्सितानुसरणेन लाघवं यातीत्यर्थः। 'अर्जुनं च तृणे नेत्ररोगे पार्थे च हैहये। द्रुमे केकिनि च' इति कोषः। अर्जुनमिवाचरति। 'उपमानादाचारे' इति क्यच्। 'क्यचि च' इतीत्वम्। चिराय संचिता शीघ्रं या नश्यति तया संपदा जगति के नरा न वञ्चिताः। सर्वेऽपि तदासक्ता वञ्चिता इत्यर्थः॥

भा रतीशितुरिवास्तु विग्रहे भारती भवतु वाक्पतेरिव।
भारतीह सकलोऽपि तद्गुणो यस्य भक्तिरचला न माधवे॥ १३॥

विग्रहे शरीरे रतीशितुः कामस्येव भा कान्तिरस्तु। वाक्पतेर्गुरोरिव भारती वाग्भवतु। परंतु यस्य माधवे निर्मला भक्तिर्नास्ति तस्य सकलोऽपि कान्तिपाण्डित्यादिर्गुणो भारति भार इवाचरति। 'सर्वप्रातिपदिकेभ्यः क्विबाचारे' इति क्विप्॥

जीवितव्यमतिमात्रचञ्चलं यादृशं कमलिनीदले जलम्।
तद्विधाय हृदयं सुनिश्चलं चिन्तयस्व हरिमेव केवलम्॥ १४॥

पद्मिनीपत्रे यादृग्जलं चञ्चलं तादृग्जीवितव्यमतिचञ्चलं तत्ततो हृदयं सुनिश्चलं कृत्वा केवलं हरिमेव चिन्तयस्व॥

योनियन्त्रणविधा न वेद ना लीलयेन्द्रियचयस्य खेलतः।
योनियन्त्रणविधानवेदना का न काः स सहते हतेप्सितः॥ १५॥

लीलया स्वेच्छया खेलतः प्रचरत इन्द्रियचयस्य नियन्त्रणविधाः नियमनप्रकारान् यो ना पुरुषो न वेद न जानाति स नरो हतेप्सितो नष्टमनोरथः सन् काः का योनौ यन्त्रणविधानं बन्धनं तज्जनिता वेदनाः पीडा न सहते। अपि तु सर्वयोनिवासव्यथाः सहत इत्यर्थः॥

तं धिगन्धमिह यस्य रामतो रा मतोऽधिककदर्थनावहः।
एकवारमपि यस्य नामतो धाम तोषकरमेति तत्परम्॥ १६॥

इह संसारे तं अन्धं पुरुषं धिक् यस्य रामतो हरेः सकाशादधिकां कदर्थनां दुःखमावहति प्रापयति तादृशो राः धनं मतो मान्यः। 'अभिसर्वतसोः—' इति द्वितीया। 'राः स्वर्णे जलदे धने' इत्यमरः। रामस्य गुणमाह—एकवारमपि यस्य नाम्ना तत्प्रसिद्धं परं केवलं तोषकरं संतोषप्रदं धाम ब्रह्मपदमेति॥

क्लेशवारणसमर्थता भवे केशवादपि परस्य किं भवेत्।
यं नमन्नपि सुरेषु गौरवं याति पातकिजनो न रौरवम्॥ १७॥

भवे संसारे केशवात्परस्याप्यन्यस्यापि देवतान्तरस्य क्लेशस्य वारणे निराकरणे सामर्थ्यं किं भवेत्। न भवेदेव। पातकिजनोऽपि यं केशवं नमन् सुरेषु गौरवं पूजां याति प्राप्नोति न तु रौरवं नरकम्॥

यस्य चेतसि न जातु कंसहा कं सहायमयमेति मानवः ।
कालकिंकरकरान्तरं गतो रङ्गतो गलितयौवनः स्त्रियाः ॥ १८ ॥

यस्य चेतसि जातु कदाचित्कंसहा कृष्णो न अयं मानव इह लोके स्त्रिया रङ्गतः क्रीडया गलितयौवनोऽमुत्र यमदूतहस्तमध्यं प्राप्तः सन् कं सहायमेति । न कमपीत्यर्थः ॥

रामनाममहिमा महोत्सवं यस्य चेतसि तनोति न श्रुतः ।
तस्य जीवितमिवावकेशिनो भूमिभारकरणाय केवलम् ॥ १९ ॥

रामनाम्नो महिमा श्रुतः सन्यस्य चेतसि महोत्सवं न तनोति तस्य जीवितं केवलं अवकेशिनो निष्फलवृक्षस्येव । 'वन्ध्योऽफलोऽवकेशी च' इत्यमरः । भूमिभारकरणाय भूभाराय भवति ॥

न क्रिया समभिहारविक्रियाजातपातकमपोहितुं प्रभुः ।
वासुदेववरिवस्यया विना या विनाशयति सर्वमप्यघम् ॥ २० ॥

क्रिया ज्योतिष्टोमादिर्वासुदेववरिवस्यया हरिपूजया विना समभिहारेण पौनःपुन्येन या विक्रिया क्रोधकामादिस्तज्जातं पातकमपोहितुं निराकर्तुं न विभुर्न समर्था । या वासुदेववरिवस्या सर्वमप्यघं पापं विनाशयति ॥

मन्द रे भव कदापि मायया मा यियासुरिह मातृकुक्षिषु ।
प्राप को न भवकाननं गतोऽनङ्गतो मृगपतेः पराभवम् ॥ २१ ॥

रे मन्द, इह संसारे मायया कृत्वा कदापि मातृकुक्षिषु जननीजठरेषु यियासुर्गन्तुमिच्छुर्मा भव । संसारेच्छापि न कर्तव्येत्यर्थः । तत्र हेतुमाह—भवकाननं संसारवनं गतः को नरोऽनङ्गतो मृगपतेः कामसिंहात्पराभवं न प्राप । अपि तु सर्वोऽपि कामेन पराभूत इत्यर्थः ॥

दुर्लभं जनुरवाप्य मानुषं मानुषङ्गमिहि कालतो मृषा ।
रामचन्द्रचरणारविन्दयोर्विन्द योगिजनजीवनं युगम् ॥ २२ ॥

हे जन्तो, दुर्लभं मानुषं मनुष्यसंबन्धि जन्म प्राप्य मृषा मिथ्या कालतः कालेनानुषङ्गं संबन्धं मा इहि मा गच्छ। मृत्युसंबन्धं मा प्राप्नुहीत्यर्थः। ततः किं विधेयमत आह—रामचन्द्रचरणकमलयोर्युगमं योगिजनानां जीवनमाधारभूतं विन्द लभस्व । 'विद्लृ लाभे' । 'शेमुचादीनाम्' इति नुम् ॥

रामचन्द्रचरणौ सुकोमलौ को मलौघमिलिताशयोऽपि सन् ।
न स्मरन्विमलतामुपागतो यागतोऽधिकनमस्क्रियौ हि यौ ॥ २३ ॥

मलौघेन पापसमूहेन मिलितः संबद्ध आशयश्चित्तं यस्य स तादृशो महापापोऽपि सन्सुतरां कोमलौ रामचन्द्रचरणौ स्मरन्कः पुमान्विमलतां निष्पापत्वं नोपागतः । अपि तु

सर्वोऽपि निष्पापो जातः। हि यतो हेतोर्यौ पादौ यागतोऽश्वमेधादेरधिकनमस्क्रियौ अधिका यागाधिकफलदात्री नमस्क्रिया ययोस्तौ। तदुक्तम्—'एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथैरतुल्यः' इति॥

सेवितैव भुवि तर्हि गोमती गोमती यदि मुकुन्दमाश्रिते।
यस्य सेवनमपास्य सारवं सारवन्न जलमप्यघापहम् ॥ २४ ॥

यदि गोमती वाग्बुद्धी मुकुन्दं हरिमाश्रिते तर्हि भुवि गोमती नदी सेवितैव। हरिभजनं विना तीर्थं व्यर्थमिति भावः। तदेवाह—यस्य हरेः सेवनमपास्य त्यक्त्वा सारवत्सारयुक्तम्। श्रेष्ठमित्यर्थः। सारवं सरयूनदीसंबन्धि जलमपि नाघापहं न पापहृत्। सरय्वा इदं सारवम्। 'दाण्डिनायन—' इत्यादिना निपातः॥

तत्कथं मधुरिपोरनाविलं नाविलम्बमवलम्बसे पदम्।
यत्समेत्य किल काञ्चनापदं नाप दम्भमतिरप्यहो जनः॥ २५ ॥

तत्तस्मादनाविलं निर्मलं मधुरिपोः पदमविलम्बं यथा तथा कथं नावलम्बसे नाश्रयसि। अहो आश्चर्ये। दम्भमतिर्दाम्भिकोऽपि जनो यद्धरिपदं समेत्य प्राप्य काञ्चनापदं किमपि दुःखं न प्राप। किलेति श्रुतौ॥

किं गतेन गुरुतापसे वने सेवने कुरु मतिं मधुद्विषः।
आत्मसान्न कुरुते हि कं सवं कंसवंशवधकृन्नतेर्नरः॥ २६ ॥

गुरवः श्रेष्ठास्तापसा यस्मिन्वने तत्र गतेन गमनेन किम्। न किमपि। मधुद्विषो हरेः सेवने मतिं कुरु। हि यतः कंसवंशवधकृन्नतेः कंसान्वयनाशकस्य हरेर्नतेर्नमस्काराद्धेतोर्नरः कं सवं यज्ञमात्मसादात्माधीनं न कुरुते। सकलयज्ञफलं प्राप्नोतीत्यर्थः। हरिनत्यैवाश्वमेधादिफलप्राप्तेः किं वनगमनेनेत्यर्थः॥

अस्ति कामविषयेऽथवा मतिस्तत्परोऽयमुपदेश उच्यते।
पद्मनाभपरिचर्यया परं तं निशम्य हृदये स्थिरं कुरु॥ २७ ॥

अथवा ते कामविषये मतिरस्ति तर्हि तत्परः कामविषयोऽयमुपदेशः कथ्यते। तमुपदेशं परमुत्कृष्टं मोक्षविषयं निशम्य श्रुत्वा वेदान्तश्रवणेनावधार्य पद्मनाभपरिचर्यया हरिसेवया हृदये स्थिरं कुरु। मोक्षातिरिक्तं कामं मा कार्षीरित्यर्थः॥

केवलं कलय नन्दनन्दनं नन्द नन्दनगतश्चिराय च।
सेवितो विबुधवल्लभाजनैर्भाजनैः सपदि सर्वसंपदाम्॥ २८ ॥

केवलं नन्दनन्दनं हरिं कलय ध्यायस्व। प्राप्नुहीत्यर्थः। 'कल संख्याने गतौ च' इति धातुरदन्तश्चुरादिः। ततः सर्वसंपदां भाजनैः पात्रभूतैर्विबुधवल्लभाजनैर्देवस्त्रीसमूहैरुर्वश्यादिभिः सेवितो नन्दने देवोद्याने गतः प्राप्तश्चिराय नन्द क्रीड॥

चक्रपाणिचरणार्चनादरो ना दरोज्झितमना यमादपि ।
विष्टपे भवति दुष्टशासिता भासिताखिलदिगन्तरः श्रिया ॥ २९ ॥

चक्रपाणिचरणार्चने हरिपादपूजने आदरो यस्य स ना पुमानीदृशो भवति । विशेषणैः सेवनफलमाह—यमादपि दरेण त्रासेनोज्झितं त्यक्तं मनो यस्य । विष्टपे लोके दुष्टानां शासिता नियन्ता । तथा श्रिया भासितान्यखिलानि दिगन्तराणि येन । जगद्व्यापिकीर्तिर्भवतीत्यर्थः ॥

वासरे मधुरिपोरुपोषिताः कामिनो दिवि वसन्ति भूषिताः ।
उर्वशीप्रमुखदेवयोषितामालिभिर्ललितभावतोषिताः ॥ ३० ॥

मधुरिपोर्वासरे एकादश्यामुपोषिता उपवासवन्तः कामिनः सकामा नरा भूषिता भूषणालंकृताः सन्तो दिवि स्वर्गे वसन्ति उर्वश्यादिस्वर्गनारीणां पङ्क्तिभिर्मनोहरैर्भावैर्विलासैस्तोषिता हर्षिताश्च भवन्ति ॥

जाग्रतो हरिपदाम्बुजाग्रतो यस्य याति सकला विभावरी ।
तत्कलेवरविभा वरीयसी स्वः सदैव रविभावदुल्लसेत् ॥ ३१ ॥

हरिचरणाग्रे जाग्रतो निद्रामकुर्वतो यस्य पुंसः सकला विभावरी रात्रिर्याति तस्य कलेवरभा वरीयसी श्रेष्ठा स्वः स्वर्गे सदैव रविभावत्सूर्यकान्तिवदुल्लसेच्छोभते ॥

रामनामभणितिं सुधाविधां मा मनागपि मुखाम्बुज त्यज ।
यामनादृतवति प्रतीयते कामना नरि न दूरदूषणा ॥ ३२ ॥

सुधाविधाममृततुल्यां रामनामभणितिं हरिनामोक्तिं मुखकमलान्मनाक् स्तोकमपि मा त्यज । शश्वद्धरिनामानि जपेत्यर्थः । यां रामनामोक्तिमनादृतवत्यसेवमाने नरि पुंसि दूरदूषणा दूरे दूषणं यस्मात्तादृशी दूषणहीना कामनाभिलाषो न प्रतीयते । हर्यभक्तस्याभीष्टालाभात् ॥

यादृशेन मनसा जनार्दनं सेवते सकलदेवतातनुम् ।
तादृशं फलमुपैति मानवः स्वर्गसौख्यमथ मुक्तिमुत्तमाम् ॥ ३३ ॥

मानवो नरः सर्वदेवस्वरूपं हरिं यादृशेन सकामनिष्कामेन मनसा सेवते तादृशं फलं स्वर्गसौख्यमुत्तमां मुक्तिं चोपैति । निष्कामसकामभेदेन ॥

मानसं यदि करोषि रामसात्कामसाध्यतमसंपदं ततः ।
मन्यसे यदुपचारचातुरी धातुरीड्यतरतां न कं नयेत् ॥ ३४ ॥

यदि मानसं चित्तं रामसाद्रामाधीनं करोषि ततस्तर्हि कामसाध्यतमसंपदं मन्यसे । तदा सर्वापि संपत्साध्यैव । यदुपचारचातुरी यस्य हरेः सेवनचातुर्यं कं नरं धातुर्ब्रह्मणोऽपीड्यतरतां स्तुत्यतमत्वं न नयेत् । हरिसेवी धातुरपीड्यो भवतीत्यर्थः ॥

क्लेशमूलमखिलं वसुप्रजापौरुषादि सुलभं शरीरिणाम् ।
दुर्लभा जगति मुक्तिकारणं रामचन्द्रचरणार्चने रतिः ॥ ३५ ॥

क्लेशानां रागादीनां मूलं कारणं वसुप्रजापौरुषादि धनसंतानपराक्रमादि सकलं शरीरिणां सुलभं परंतु जगति भूतले मुक्तेः कारणभूता हरिपादपूजाप्रीतिर्दुर्लभा ॥

विष्णुभक्तिजितवासनाशया नाशया तरलयन्ति मानसम् ।
मालतीमधुनि लब्धकेलयः केलयः कुरवकेषु सस्पृहाः ॥ ३६ ॥

हरिभक्त्या जिता नाशिता वासना दुष्प्रीतयो यस्मादीदृश आशयश्चित्तं येषां तादृशा नरा आशया तृष्णया मानसं न तरलयन्ति चञ्चलं न कुर्वन्ति । तत्र दृष्टान्तः—मालतीकुसुमरसे लब्धा केलिः क्रीडा यैस्तादृशाः के अलयो भ्रमराः कुरबकेषु करीरेषु सस्पृहाः सतृष्णा भवन्ति । न केऽपीत्यर्थः ॥

तावका वयमनन्त शावका नावकाशमिह किं निरीक्षितुम् ।
तद्ददासि वत बालवत्सलो विश्वबीज जनको न को भवेत् ॥ ३७ ॥

हे अनन्त, यदि वयं तावकास्त्वत्संबन्धिनः शावकाः शिशवः । 'पृथुकः शावकः शिशुः' इत्यमरः । तर्हि इह संसारे निरीक्षितुमस्मान्द्रष्टुमवकाशं किं न ददासि । कुत्रापि समयेऽस्मानवलोकयेत्यर्थः । वतेति हर्षे । हे विश्वबीज जगत्कारण, को जनकः पिता बालवत्सलो बालप्रियो न भवेत् । पिता पुत्रप्रियो भवेदेवेत्यर्थः ॥

भक्तिरस्ति यदि कृष्ण तावकी तत्किमेति भवसंभवं भयम् ।
अन्धकारगरिमा करोति किं भास्करे नयनमार्गमागते ॥ ३८ ॥

हे कृष्ण, यदि तावकी भक्तिरस्ति तर्हि भवसंभवं संसारोत्थं भयं किमेति प्राप्नोति । न प्राप्नोतीत्यर्थः । तत्र दृष्टान्तः—भास्करे रवौ नयनमार्गमागते चक्षुर्विषयमागते सत्यन्धकारगरिमा तमोबाहुल्यं किं करोति । न किमपीत्यर्थः ॥

श्रीनृसिंह तव पादयोर्द्वयं नित्यमत्ययभयादयादयम् ।
मन्मनोणुरणुभिर्विना भयं रंरमीतु सुरसिन्धुसंभवैः ॥ ३९ ॥

हे श्रीनृसिंह, अयं मन्मन एवाणुः परमाणुरत्ययभयान्मृत्युभीतेर्हेतोस्तव पादद्वयं नित्यमयात् सर्वदा प्राप्तः । अतः सुरसिन्धुसंभवैः पदद्वयगतगङ्गोद्भवैरणुभिर्जलबिन्दुभिः सह भयं विना मृत्युभयं विहाय रंरमीतु अत्यन्तं रमताम् । रमतेर्यङ्लुकि लोटि रूपम् ॥

इन्द्रियं विषयसाधनप्रियं विग्रहः सपदि दत्तनिग्रहः ।
मानसं मिषति का न संपदः केवलं तु मम ते बलं हरे ॥ ४० ॥

हे हरे, ममेन्द्रियं चक्षुरादि विषयाणां साधनं संपादनं प्रियं यस्येदृशम् । विग्रहः शरीरं

दत्तो निग्रहः पराजयो येन तादृशः । मानसं काः संपदो न मिषति स्पृहयति । सर्वा अपीत्यर्थः । एवमिन्द्रियदेहमनःसु मां पराभवत्सु मम केवलं ते तव बलम् । त्वं रक्षक इत्यर्थः ॥

रामचन्द्र तव भक्तियोगतो यो गतो जनिभृतामपि क्षणः ।
तेन तन्नरकसंघसाध्वसं साध्वसंभवमशेषतो व्रजेत् ॥ ४१ ॥

हे रामचन्द्र, जनिभृतां प्राणिनां तव भक्तियोगाद्यः क्षणः कालो गतस्तेन नरकसमूहाज्जातं साध्वसं भयमशेषतः समग्रं साधु यथा तथा असंभवं नाशं व्रजेत् । क्षणमात्रकृतया तव भक्त्या यदि पापनाशस्तर्हि जन्मावधि कृतया किमु वक्तव्यमित्यर्थः ॥

पद्मनाभ तव पादपद्मयोः पद्मयोनिरुपचारचातुरीम् ।
शीलयन्भुवनकर्तृतामगात्तामगाधमहिमश्रियं च सः ॥ ४२ ॥

हे पद्मनाभ, पद्मयोनिर्ब्रह्मा तवाङ्घ्रिकमलयोः सेवनचातुर्यमभ्यस्यन् लोककर्तृत्वं प्राप । तां प्रसिद्धामगाधो महिमा कीर्तिर्यस्यास्तादृशीं श्रियं च सोऽगादिति संबन्धः ॥

रामचन्द्र तव पादसेवया देव याति न किमीहितं नरः ।
तन्न रक्षसि कथं दयानिधे तानि धेहि चरितानि ते मयि ॥ ४३ ॥

हे रामचन्द्र हे देव, तव पादसेवया चरणकमलसेवया नरः किमीहितं कमभिलाषं न याति न प्राप्नोति । सर्वाभिलाषदायिनी तव भक्तिरित्यर्थः । हे दयानिधे, तत्तर्हि कथं न रक्षसि । मामिति शेषः । तानि प्रसिद्धानि ते तव चरितानि गोवर्धनोद्धरणादीनि मयि धेहि धारय । तव चरितविस्मरणं मास्त्वित्यर्थः ॥

चन्द्रदीधितिचयान्प्रभावतो भावतोऽपि हि जयन्ति याः प्रभो ।
कीर्तयो हृदि लसन्तु मे घना मेघनादवधबन्धुरास्तव ॥ ४४ ॥

हे प्रभो, मेघनादो रावणात्मजस्तस्य वधेन बन्धुरा मनोहरा घना निबिडास्तव ताः कीर्तयो मे मम हृदि लसन्तु स्फुरन्तु । ताः काः । याः प्रभावतः प्रभावेण महिम्ना भावतः कान्तिमतश्चन्द्रदीधितिचयान् शशिरश्मिसमूहान् जयन्ति । ततोऽप्युज्ज्वलाः ॥

ये भजन्ति तव पादपङ्कजं पङ्कजं न भयमाप्नुवन्ति ते ।
यस्य पादकमलार्चनेहया नेह याति भवितां जनः पुनः ॥ ४५ ॥

हे हरे, ये तव पादपङ्कजं भजन्ति ते पङ्कजं पापजातं भयं न प्राप्नुवन्ति । यस्य पादपद्मपूजालक्षणया ईहया चेष्टया जनः पुनरिह लोके भवितां जन्मवत्त्वं न याति न प्राप्नोति ॥

पीतचीवरधरं रमापतिं नीलनीरजदलोपमद्युतिम् ।
मालया तुलसिमञ्जरीभुवा भूषितं भुवनभूषणं भजे ॥ ४६ ॥

पीतं चीवरमंशुकं धरति तं रमायाः कान्तं नीलं यन्नीरजदलं पद्मपत्रं तत्तुल्या द्युति-

र्यस्य तं श्यामं तुलसिमञ्जरीजातया मालया भूषितं लोकाभरणं हरिं भजे। तुलस्या मञ्जरीति समासेऽपि इकारौ स्त्रीकृतौ ह्रस्वौ क्वचित् इति ह्रस्वः॥

मन्महे किमपि मन्महेशितुर्धाम नित्यरमणीयमव्ययम्।
यद्विदन्ति नहि सूरयो जना वेदवाचि कृतयुक्तियोजनाः॥ ४७॥

नित्यं रमणीयं सुन्दरमव्ययमपक्षयशून्यं किमपि लोकोत्तरं महेशितुर्हरेस्तद्धाम स्वरूपं वयं मन्महे चिन्तयामः। वेदवाचि वेदवाण्यां कृता युक्त्या योजना यैस्ते। वेदार्थज्ञा अपि सूरयो बुधा यद्धाम न विदन्ति न जानन्ति॥

रागिणां सुरतरङ्गिणीक्षणात्स्वर्वधूसुरतरङ्गिणी तनुः।
अस्तु किं पुनरियं विरागिणां देहमात्रमपि यन्न सासहिः॥ ४८॥

रागिणां सकामानां तनुः शरीरं सुरतरङ्गिणीक्षणाद्गङ्गादर्शनात्स्वर्वधूसुरतरङ्गिणी अप्सरोमैथुनरागवती अस्तु। सकामानां गङ्गादर्शनात्स्वर्गाप्तिर्भवतु नाम। इयं गङ्गा पुनर्विरागिणां निष्कामानां देहमात्रमपि यन्न सासहिः न सहते तत्किम्। सकामानां स्वर्गं ददातु निष्कामानां देहमपि कथं न सहते। तेभ्यो मुक्तिं ददातीत्यर्थः॥

ईदृशं निजरसान्निरन्तरं कुर्वती हसितवारिजानना।
गर्जति त्रिभुवने निरर्गलं तत्फलं हरिपदाश्रयादलम्॥ ४९॥

निजरसात्स्वरागान्निरन्तरमीदृशं पूर्वश्लोकोक्तं सकामनिष्कामेभ्यो बुभोगमुक्तिरूपं फलदानं कुर्वती हसितवारिजानना विकसितकमलमेव मुखं यस्या ईदृशी त्रिभुवने निरर्गलं गर्जति तदुभयविधं फलं हरिपदाश्रयादलं समर्थम्। हरिचरणोत्पन्नत्वादेवेदृशं सामर्थ्यमित्यर्थः॥

या मुकुन्दपदपङ्कजालया लीलया हरति सर्वपातकम्।
दूषणानि तव हन्तु सा धुनी साधुनीरजविराजितोदका॥ ५०॥

या हरिपदपद्मालया सती लीलया सर्वपातकं हरति साधूनि नीरजानि पद्मानि तैर्भूषितजला सा धुनी नदी गङ्गा तव दूषणानि पापानि हन्तु नाशयतु॥

राजन्यव्याजराजद्दितिदनुतनुजोद्दामदोर्दण्डदर्प-
प्राग्भारस्फारकृत्येतरभरतरले भूतलेऽम्भोजजन्मा।
अस्तौषीदस्तदोषस्तवनिवहमहोत्साहवत्या गिरा यं
तं षड्भ्यो दर्शनेभ्यः कमपि समधिकं चेतसाराधयामः॥ ५१॥

इति श्रीपुरुषोत्तमकृतायां विष्णुभक्तिकल्पलतायां रागिविरागिफलविवेको नाम द्वितीयः स्तबकः।

राजन्यानां नृपाणां व्याजेन मिषेण राजन्तो ये दितिदनुतनुजा दैत्या दानवाश्च तेषामुद्दामा उत्कटा ये दोर्दण्डा भुजास्तेषां दर्पप्राग्भारेण गर्वोत्कर्षेण स्फारं महत् यत्क्षत्येतरदक्षत्यं तस्य भरोऽतिशयस्तेन तरले चञ्चले भूतले अम्भोजजन्मा ब्रह्मा अस्तदोषो दोषरहितो यः स्तवनिवहः स्तुतिसमूहः स एव महोत्साहो यस्यां तया गिरा यमस्तौषीत् तुष्टाव षड्भ्यो दर्शनेभ्यो मीमांसादिभ्यः समधिकं सर्वोत्कृष्टं तं कमपि ब्रह्मस्वरूपं चेतसा आराधयामः। स्रग्धरा छन्दः॥

इति श्रीमहीधरविरचिते विष्णुभक्तिकल्पलताविवरणे रागिविरागिफलविवेको नाम द्वितीयः स्तबकः।

---

## तृतीयः स्तबकः।

षष्ठी मङ्गलवारदास्ति हृदये येषां व्यतीपाततो
न त्रासः श्रवणेऽपि विष्टिरनिशं तेषां न वा तद्गरम्।
अन्ये तु व्यतिपातविष्टिविवशा दर्शेन्दुदीनानना
दृश्यन्ते भरणीशभृत्यभयतो भीता भुवो मण्डले॥ १॥

'तिथिर्गौर्योः स्मृता षष्ठी' इति कोषात् 'षष्ठी तु षण्णां पूरण्यां कात्यायन्यामपीष्यते' इति विश्वोक्तेः षष्ठी गौरी मङ्गलवारदा मङ्गलसमूहदात्री। 'समूहनिकरव्रातवारसंघातसंचयाः' इत्यमरः। सा येषां हृदयेऽस्ति तेषां गौरीस्मरणलीनानां व्यतीपाताद्ुत्पाताश्रासो न भवति। 'व्यतीपातो महोत्पाते योगभेदावपातयोः' इति विश्वोक्तेः। तथा तेषां श्रवणे कर्णेऽप्यनिशं निरन्तरं विष्टिर्न द्रविणमन्तरेण परकर्मकारित्वं न। 'विष्टिः कर्मकरे भद्रे प्रेषणे चेतनेऽपि च' इति विश्वः। न वा तेषां गरं विषम्। विषकृतपराभवोऽपि नास्ति। व्याधिर्वा नास्ति। 'गरो व्याधावुपविषे विषे च करणे गरम्' इति विश्वः। अन्ये गौर्या अभक्तास्तु व्यतिपातविष्टिभ्यां महोत्पातपरसेवकत्वाभ्यां व्याकुलाः सन्तो दर्शेन्दुदीनानना अमावास्याचन्द्रतुल्यवदना भरणीशो भरणीनक्षत्रस्वामी यमस्तस्य भृत्या यमदूतास्तेभ्यो यद्भयं ततो भीता भुवो मण्डले दृश्यन्ते। शार्दूलविक्रीडितं छन्दः। 'सूर्याश्वैर्मसजास्तथा सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात्॥

अनुजनुः क नु मानुषयोनिषु भ्रमसि जिह्म हितं महितं शृणु।
श्रय जगत्रितयप्रियमच्युतं विमलमङ्गलमङ्गलसच्छ्रियम्॥ २॥

हे जिह्म, अनुजनुः प्रतिजन्म मानुषयोनिषु क भ्रमसि कुतो भ्रमणं करोषि। महितं पूजितं हितं वाक्यं शृणु जगत्त्रितयप्रियं त्रैलोक्यवल्लभं निर्मलमङ्गलयुतं अङ्गे लसन्ती शोभमाना श्रीर्यस्य तमच्युतं हरिं श्रय सेवस्व। द्रुतविलम्बितं छन्दः॥

अलस मानस मानसमा न ते क्वचन केऽपि विरोधविधायिनः।
जड यदीयसमागमसंभवावतरहेतुरहो तव कर्तृता॥ ३॥

हे अलस आलस्ययुक्त, हे मानस चित्त, ते तव मानसमा अभिमानतुल्याः केऽपि विरोधविधायिनः शत्रवः क्वचन क्वापि न सन्ति। हे जड मूर्ख, यदीयसमागमसंभवा अभिमानसङ्गाज्जाता अनेकावतारकारणभूता तव कर्तृता कर्तृत्वम्। वास्तवं कर्तृत्वं तव नास्ति आभिमानिकमेवेत्यर्थः॥

यदि नरा दिनरात्रिषु केशवे जपरताः परतापनिवारिणि।
अपि न मोहतमोहतचेतसस्तदपि कष्टकथापि कुतो भवेत्॥ ४॥

नरा यदि दिनरात्रिष्वहोरात्रं परतापनिवारिणि आध्यात्मिकादिनिवर्तके केशवे जपरताः स्युस्तदपि तदा मोहतमसा अविवेकान्धकारेण हतं चेतो येषामीदृशा न भवन्ति तर्हि कष्टकथा दुःखवार्तापि कुतो भवेत्। न भवेदेवेत्यर्थः॥

पिब मुकुन्दकथा भवतोऽन्यथा भवपथाघटिता विविधव्यथाः।
क इव वारयिता दयिताद्युपद्रवजवप्रचुरोपचयस्थिराः॥ ५॥

हे जन्तो, मुकुन्दकथाः पिब आदरेण शृणु। अन्यथा हरिकथापानमन्तरेण दयितादीनां कलत्रपुत्रगृहवित्तपश्वादीनां य उपद्रवजवः पराभववेगस्तस्य प्रचुरोऽधिको य उपचयो वृद्धिस्तेन स्थिराः यावज्जीवानुवर्तिनीः भवपथे संसारमार्गे आ समन्तात् घटिता रचिता भवतस्तव विविधव्यथा नानापीडाः क इव वारयिता। न कोऽपि निवारक इत्यर्थः॥

हृदयतोयजतो यज तोषितं भृशमनन्तमनन्तरया श्रिया।
किमितरैर्मितरैर्विमुखैर्मखैर्निखिलदोषदृशेक्षितुमीहितैः॥ ६॥

अनन्तरया निकटवर्तिन्या श्रिया भृशमत्यन्तं तोषितं सेवितमनन्तं हरिं हृदयतोयजतो हृत्कमले। सार्वविभक्तिकस्तसिल्। यज पूजय। मितं स्वल्पं रान्ति ददति ते मितरास्तैरल्पस्वर्गादिफलदैरत एव हरेर्विमुखैर्निखिला ये दोषास्तेषां दृष्ट्या ईक्षितुमवलोकयितुमीहितैः सदोषैरितरैर्हरिभजनादन्यैर्मखैर्ज्योतिष्टोमादिभिः किम्। न किमपीत्यर्थः॥

चरणतामरसं मुरवैरिणः स्मर चिरं रुचिरं रुचिरङ्ग चेत्।
भवति तोयनिधिं तव जन्मवन्न सुतरं तरितुं त्वरितं भवम्॥ ७॥

अङ्गेति संबुद्धौ। हे जन्मवन् जन्तो, चेद्यदि असुतरं सुखेन तरितुमशक्यं भवं तोयनिधिं संसाराब्धिं त्वरितं तूर्णं तरितुमभिक्रमितुं तव रुचिर्भवति तर्हि रुचिरं कान्तं मुरवैरिणो हरेश्चरणतामरसं पदपद्मं चिरं स्मर॥

मनसिकृत्य कृतार्थय जीवितं त्वमधुना मधुनाशनमादरात्।
भवति धर्मविधौ न पटीयसी दशमिता शमिता तनुरङ्गिताम्॥ ८॥

अधुनैव मधुनाशनं हरिं आदरान्मनसिकृत्य विषयान्तरपरित्यागेन संचित्य जीवितं

कृतार्थय । 'कणेमनसी श्रद्धाप्रतीघाते' इति गतिसंज्ञेन मनसिशब्देन समासे सति 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति क्त्वाप्रत्ययस्य ल्यबादेशः । अधुनेति कथमत्याग्रह इत्याह—दशमोऽवस्थाविशेषोऽस्यास्तीति दशमी वृद्धः । 'वर्षीयान्दशमी ज्यायान्' इत्यमरः । तस्य भावो दशमिता तया शमिता जराजर्जरिता अङ्गिनां देहिनां तनुः शरीरं धर्मविधौ धर्मानुष्ठाने पटीयसी पटुतरा समर्था न भवति । वार्द्धके हरिभजनाशक्तेरिदानीमेव हरिं भजेत्यर्थः ॥

निजनिजव्यवहारविधिक्षमो भवति यावदयं खचयस्तव ।
हरिपदप्रणतौ क्रियतां त्वरा तव पुरा वपुराश्रयते जरा ॥ ९ ॥

'खमिन्द्रिये सुखे स्वर्गे शून्ये बिन्दौ विहायसि' इति,'चयः समूहे प्राकारमूलबन्धे समाहृतौ' इति च विश्वोक्तेः खानामिन्द्रियाणां चयः समूहोऽयं श्रोत्रादिस्तव तावको यावन्निजनिजव्यवहारविधौ श्रवणस्पर्शनादिकर्तव्ये क्षमः शक्तो भवति तावद्धरिपदप्रणतौ नारायणचरणनमस्कारे त्वरा वेगः क्रियताम् । यतो जरा तव वपुः पुरा आश्रयते आश्रयिष्यते 'यावत्पुरानिपातयोर्लट्' इति लृडर्थे लट् । वार्द्धके जराग्रस्तेन्द्रियाणामसामर्थ्ये हरिभजनाशक्तेरिदानीं भजेत्यर्थः ॥

अभिमतं लभते तपसा जनस्तदपि सौख्यकरं न भवेत्पुनः ।
इदमनित्यमिति व्यथते मनस्तदुचितं हरिसेवनमेव नः ॥ १० ॥

जनस्तपसा यद्यप्यभीष्टं प्राप्नोति तदपि पुनः सुखकारि न भवेत् । यतोऽनित्यमिदमिति मनो व्यथते व्याकुलीभवति । तत्तस्मान्नोऽस्माकं हरिसेवनमेवोचितं योग्यं नित्यत्वादित्यर्थः ॥

दनुजतर्जनतो जनतोषकृद्धनसमानवपुर्नवपुष्टिभूः ।
वसतु हृत्कमले कमलेश्वरश्चिरमयं रमयन्मम मानसम् ॥ ११ ॥

दनुजानां दानवानां तर्जनेन तिरस्कारेण जनानां संतोषकारी मेघश्यामो नवाया नूतनायाः पुष्टेः पोषणस्य भूः स्थानम् । जगत्पोषणकृदित्यर्थः । कमलेश्वरो रमापतिरयं हरिश्चिरं मम मानसं रमयन्नानन्दयन्मे हृत्कमले वसतु ॥

अतिभयंकरसंसृतिसागरे रतिपतिप्रमुखैः कलितं झषैः ।
त्वमव माधव मां तुलसीदलैर्ललितमाल तमालदलद्युते ॥ १२ ॥

हे तुलसीदलैः कृत्वा ललितमाल मनोहरमालायुक्त, हे तमालपत्रश्याम, हे माधव, अत्यन्तं भयंकरे संसारसमुद्रे रतिपतिप्रमुखैः कामक्रोधाद्यैर्झषैर्मत्स्यैः कलितं भक्षितं मां त्वमव रक्ष ॥

तव दृगन्तसुधालहरी मयि त्रिविधतापवति क्षणमापतेत् ।
नरहरे बहवोऽपि यदुद्धृताः शुभवता भवता भवतापिताः ॥ १३ ॥

हे नरहरे, त्रिविधतापवति आध्यात्मिकाधिभौतिकाधिदैवतदुःखयुक्ते मयि तव दृगन्तः कटाक्ष एव सुधालहरी अमृतोर्मिः क्षणमापतेदापततु । 'विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्' । इति प्रार्थने लिङ् । यद्यतः शुभवता कल्याणयुक्तेन भवता त्वया भवतापिताः संसारदुःखपीडिता बहवोऽप्युद्धृताः ॥

विविधपातकजातकदर्थनाकुलितजन्तुशरण्यशिरोमणे ।
मम मनो विदधातु पदाम्बुजात्तव रमावर मा वरमाश्रयम् ॥ १४ ॥

नानाविधं यत्पातकजातं पापौघस्तेन या कदर्थना दुःखं तया आकुलिताः पीडिता ये जन्तवस्तेषां शरण्याः शरणे साधवो रक्षकास्तेषां शिरोमणे मुकुटभूत हे रमावर लक्ष्मीपते, मम मनसस्तव पदाम्बुजादवरमन्यमाश्रयं मा विदधातु मा कुरुताम् । मन्मनस्त्वत्पदाम्बुज एव तिष्ठत्वित्यर्थः ॥

सततसंसरणाध्वनि धावतो भवतु मे भवदङ्घ्रिषु विश्रमः ।
प्रकटयन्स्वमपाकुरु मे तमः कपटवामन वा मनसि क्षणम् ॥ १५ ॥

नित्यं संसारमार्गे गच्छतो मे त्वच्चरणे विश्रान्तिर्भवतु । हे कपटवामन मायाखर्व, त्वमपि क्षणं क्षणमात्रं मे मनसि स्वरूपं प्रकाशयन् तमोऽज्ञानं नाशय ॥

अधिभवाटवि मन्मथवात्यया कलुषितात्मतया निजदिङ्मुखम् ।
अज न वेद्मि तदत्र दयां कुरु भ्रमति मे मतिमेदुर मानसम् ॥ १६ ॥

हे अज हे हरे, अधिभवाटवि संसारवने मन्मथ एव वात्या वातस्य मण्डली तया कामरूपिण्या वात्यया कलुषित आत्मा चित्तं यस्य तस्य भावस्तत्ता तया कामव्याकुलत्वेन निजदिङ्मुखं त्वदीयदिशोमुखं न वेद्मि यस्यां दिशि त्वमसि तां न जानामि । तत्तस्मादत्र मयि दयां कुरु । हे मतिमेदुर । मत्या मेदुरो व्याप्तः । हे बहुबुद्धे, मे मम मानसं भ्रमति चित्तभ्रामकमज्ञानं निवर्त्य त्वत्स्वरूपं दर्शयेत्यर्थः ॥

विविधदानवराजिविराजितोर्जितदिगन्तचरिष्णुयशोजनिः ।
तव करोतु करोऽतुलविक्रमोऽतिसुख(ष)मः सुखमच्युत सर्वदा ॥ १७॥

विविधा या दानवराजिर्दैत्यश्रेणिस्तया विराजिताः शोभिता अत एवोर्जिता उत्कृष्टा ये दिगन्ता दिक्प्रदेशास्तत्र चरिष्णु गमनशीलं यद्यशो दैत्यमारणोत्था कीर्तिस्तस्या जनिरुत्पत्तिर्यस्मादीदृशः अत एवातुलविक्रमोऽनुपमपराक्रमोऽतिसुषमोऽत्यन्तं शोभमानः । 'सुषमा परमा शोभा' । हे अच्युत, ईदृशस्तव करो हस्तः सर्वदा सुखं करोतु ॥

ध्रुवमयुर्लयमप्यभियातयो महसि ते ह सितेतरतेजसि ।
तदपराधपरा धरणीभरोद्धर नराः किमु ते स्मरणे रताः ॥ १८ ॥

हे धरणीभरोद्धर धरण्याः पृथ्व्या भरमुद्धरतीति पृथ्वीभारहर, अपराधपरा आगस्कृ-

तोऽभियातयः शत्रवः शिशुपालादयोऽपि। 'अभियातिपराराति—' इत्यमरः। हे स्फुटं सितेतरतेजसि श्यामसुन्दरे ते तव महसि स्वरूपे ध्रुवं लयमयुः प्रापुर्लीनाः। तर्हि ते तव स्मरणे रता नरास्त्वयि लीयन्ते तत्र किमु वक्तव्यमित्यर्थः॥

पतति पन्नगराजधृता धरा तिमिरमेति गतिं रविमण्डले।
तदपि कृष्ण कदापि भवत्पदार्चनपरे न परेतपतेर्दरः॥ १९॥

पन्नगराजेन शेषेण धृतापि धरा भूः पतति। रविमण्डलेऽपि तिमिरं तमो गतिमेति। सूर्योऽपि नश्यतीत्यर्थः। हे कृष्ण, तदपि प्रलयकालेऽपि भवत्पदार्चनपरे त्वत्पूजके नरे कदापि परेतपतेर्यमस्य दरस्त्रासो न। प्रलयेऽपि त्वद्भक्ता न नश्यन्तीत्यर्थः। 'परासुप्राप्तपञ्चत्वपरेतप्रेतसंज्ञकाः(संस्थिताः)' इत्यमरः। परेतानां मृतानां पतिर्यमः॥

न भवतो भवतोयनिधौ नृणां शरणमस्ति परं प्रणिमज्जताम्।
जलजनेत्र जनेऽत्र दधद्दयां भवभयादव यादव तेन माम्॥ २०॥

हे जलजनेत्र पुण्डरीकाक्ष, भवतोयनिधौ संसाराब्धौ प्रणिमज्जतां नृणां भवतस्त्वत्तः परमन्यच्छरणं नास्ति। हे यादव, तेन कारणेन त्वदन्यशरणाभावलक्षणेनात्र मयि जने दयां दधद्धारयन्भवभयात्संसारभीतेर्मामव रक्ष॥

वसतिरेव सती वसतीश्वरो हृदि निरामय राम यदा भवान्।
जनमनोहर नोऽहरपि क्षपा न रमसेऽरमसेचनकेऽत्र चेत्॥ २१॥

हे निरामय निर्दोष हे राम, यदा ईश्वरः समर्थो भवान् हृदि चित्ते वसति तदा वसतिरेव रात्रिरपि सती समीचीना। 'वसती रात्रिवेश्मनोः'। हे जनमनोहर लोकानन्ददायिन्, अरमत्यर्थे असेचनके अतृप्तिमति। दुःखदायिनीति यावत्। 'तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्' इत्यमरः। अत्र चित्ते चेत्त्वं न रमसे तर्हि तदा नोऽस्माकमहरपि दिवसोऽपि क्षपा रात्रितुल्यः। त्वयि चित्तागते सर्वदा प्रकाशोऽन्यथा तिमिरमित्यर्थः॥

मम मनश्चरितार्थयतु क्षणं तव सुसंहननं हननं भियाम्।
अमरशेखर शेषरमाप्रियं सजलतोयदतो यदतिद्युति॥ २२॥

हे अमरशेखर सुरमुकुटभूत, यत्सजलतोयदतः सनीरमेघादतिद्युति अधिककान्तियुक्तं शेषरमाप्रियं नागेन्द्रलक्ष्म्योर्वल्लभं भियां भयानां हननं नाशकं तव सुष्ठु संनहनं शोभनं शरीरं तन्मम मनः क्षणं चरितार्थयतु कृतार्थं करोतु। 'तनुस्तनूः संहननं शरीरम्' इति हलायुधः। क्षणं त्वां ध्यात्वा कृती भवेयमिति भावः॥

भवविडम्बनया रहितोऽनया क्व समये समयेष्टविपक्षयोः।
तव रमेश रमे शरणं गतः प्रतिपदातिपदाश्रितया तव॥ २३॥

हे रमेश श्रीपते, अनया भवविडम्बनया संसारदुःखेन रहितस्तवात्यन्तं पदाश्रितया प्रतिपदा चेतनया ज्ञानेन। 'प्रतिपज्ज्ञप्तिचेतनाः'। तव शरणं गतः सन् क्व समये कस्मि-

न्काले रमे क्रीडामि। किंभूतया प्रतिपदा। इष्टविपक्षयोर्मित्रामित्रयोः समया तुल्यया। रागद्वेषहीनः कदा भवच्छरणं यामीत्यर्थः॥

शमितसंसृतिसंतमसं महः श्रुतिगिरा रममाणमहो रहः।
प्रकटयन्प्रकृतेः परमात्मनो मम रमस्व रमावर मानसे॥ २४॥

हे रमावर श्रीपते, शमितं नाशितं संसृतिः संसार एव संतमसं गाढं तमो येन तथा रहः श्रुतिगिरा वेदवाण्या सह रममाणं प्रकृतेर्मायायाः परं मायातीतमात्मनः स्वस्य महस्तेजो मम मानसे प्रकटयन्प्रकटं कुर्वन् रमस्व॥

दिवि भवा विभवा विभवात्मनो वशमिताः शमितामितहृद्रुजः।
प्रथमपुण्यचयव्ययहेतवस्तव तु भक्तिरचिन्त्यफलायतौ॥ २५॥

हे विभो, दिविभवाः स्वर्गस्था विभवा भोगा आत्मनो वशमिताः प्राप्ताः शमिता अमिता बहवो हृद्रुज आधयो यैरीदृशा भवन्ति। परंतु प्रथमं पूर्वं संचितो यः पुण्यचयः सुकृतौघस्तस्य व्यये नाशे हेतवः कारणभूताः। तु पुनस्तव भक्तिरायतावुत्तरकाले अचिन्त्यफला बहुफलयुक्ता। तव भक्तिफलव्ययो नास्तीत्यर्थः॥

अतिदयालु मनः कमनच्छविस्तनुरकण्टकराज्यमिलातले।
तव परीष्टिलता दलतां गता गजवरा जवराजितविग्रहाः॥ २६॥

अत्यन्तं दयायुक्तं मनः, कमना कमनीया छविः कान्तिर्यस्येदृशी तनुः शरीरम्, इलातले भूमण्डलेऽकण्टकं रिपुहीनं राज्यम्। 'कण्टकः क्षुद्रवैरिणि। वेणौ द्रुमाङ्गे रोमाञ्चे' इति कोषः। तथा जवेन वेगेन राजिताः शोभिता विग्रहाः शरीराणि येषामीदृशा गजवरा दन्तिश्रेष्ठा एते पदार्थास्तव परीष्टिलतायाः सेवालक्षणवल्ल्या दलतां पत्रभावं गताः। तव सेवया एते सहजेन भवन्तीत्यर्थः॥

विदधतु क्रतुकोटिमहोत्सवाः कमलया मलयापनमीश्वराः।
तव पदस्मृतिरेव पुनातु मां यदसि देव दयालुरकिंचने॥ २७॥

क्रतुकोट्य एव महोत्सवा येषां ते ईश्वरा धनिनः कमलया धनेन मलयापनं पापनाशनं विदधतु कुर्वन्तु। मां तु तव पदस्मृतिरेव पुनातु शोधयतु। यद्यस्मात् हे देव, अकिंचने निर्धने त्वं दयालुरसि॥

दहति दारुणदुःखपरम्परा सदय यादव या दववद्वपुः।
प्रथमजन्मसु सम्यगुपार्जिता शमय तामयतात्मतया मया॥ २८॥

अयतात्मतया अजितेन्द्रियत्वेन मया पूर्वजन्मसु सम्यगुपार्जिता या दारुणानां दुःखानां परम्परा दववद्दावानलवद्वपुर्देहं दहति। हे यादव यदुवंशरत्न, हे सदय दयालो, तां दुःखश्रेणीं शमय निवर्तय॥

खरकुलं तरसा विनिपात्य तत्सतृणराजवनं जवनं मृधे ।
सुखयति स्म दयालुतया भवान्विजितधेनुक धेनुकदम्बकम् ॥ २९ ॥

हे विजितधेनुक विशेषेण जितः पराजितो धेनुको दानवो येन तादृश, तृणराजानां तालानां वनेन सहितं मृधे युद्धे जवनं वेगवत् तत्प्रसिद्धं खरकुलं रासभदेहधारिदानवान्वयं तरसा वेगेन निपात्य धेनुकदम्बकं गोसमूहं दयालुत्वेन भवान्सुखयति स्म सुखयुक्तमकार्षीत् ॥

परवधूकिलकिञ्चितचिन्तया मलिनमीश मनः शमनः क्रुधः ।
न परिचिन्त्य बिभेति ततोऽव मां मदनतात नतातनुतोषकृत् ॥ ३० ॥

परस्त्रीणां किलकिञ्चितं विलासस्तस्य स्मरणेन मलिनमपि मे मनः शमनक्रुधो यमक्रोधान्परिचिन्त्य न बिभेति । हे ईश, हे मदनतात कामपितः, हे नतातनुतोषकृत् प्रणतानां बह्वानन्दकारिन् ततो हेतोर्मामव रक्ष । त्वच्चरणलग्नं मच्चेतो यमं न गणयतीत्यर्थः ॥

जननकोटिकृतं दुरितं नरस्तरति नामनि ते मनिते मनाक् ।
तदपि माधव मां किमुपेक्षसे भवदवे वद वेदनयानया ॥ ३१ ॥

हे माधव, नरस्तव नामानि मनाक् स्तोकमपि मनिते पूजिते ध्याते सति । 'मनअर्चने' क्तान्तः । जननानां जन्मनां कोट्या कृतं दुरितं पापं तरति । तदपि भवदवे संसारदावानले अनया वेदनया पीडया उपलक्षितं मां किमुपेक्षसे तद्वद । वाक्यार्थस्य कर्मत्वम् । मदुपेक्षां हित्वा मां पालयेत्यर्थः । 'वेदना ज्ञानपीडयोः' ॥

निखिलविष्टपकष्टनिवारणं परशुरामवपुर्दधदेव यत् ।
पुनरभूद्रघुवंशविभूषणं जनहिते नहि ते शिथिलादरः ॥ ३२ ॥

हे हरे, निखिलानां विष्टपानां जगतां कष्टस्य निवारकं परशुरामस्य वपुर्दधदेव धारयन्नेव यत्त्वं (भवान्) पुना रघुवंशस्य विभूषणभूतो रामो दाशरथिरभूदेतद्युक्तमिति शेषः । हि यतो जनानां हिते कार्ये ते तव शिथिलादरो नास्ति ॥

सममर्त्यवधूनिवहैर्मधौ कुसुमपूरितभूरितरूत्तरे ।
मम भवत्स्मृतिसौख्यशतांशदा न यदुनन्दन नन्दनकेलयः ॥ ३३ ॥

कुसुमैः पूरिता भूरयो बहवस्तरवो वृक्षा उत्तरा अधिका यस्मिन्नीदृशे मधौ वसन्ते अमर्त्यवधूनां देवाङ्गनानां निवहैः समूहैः समं सह नन्दनवनकेलयो वासवोद्यानक्रीडाः हे यदुनन्दन हरे, भवत्स्मृत्या यत्सुखं तस्य शतांशदात्र्यो न भवन्ति ॥

मधुरवेणुरवेण विमोहितव्रजवधूजवधूतमवार्तयः ।
स्मरणमात्रमिताः शमयन्त्यघं तव न के वनकेलिमहोत्सवाः ॥ ३४ ॥

मधुरो यो वेणुरवस्तेन विमोहिता या व्रजवध्वो गोप्यस्तासां जवेन तरसा धूता निवर्तिता भवार्तयः संसारव्याधयो यैरीदृशाः हे हरे, तव के वनकेलय एव महोत्सवाः स्मरणमात्रमिताः प्राप्ताः सन्तोऽघं पापं न शमयन्ति । अपि तु शमयन्त्येव ॥

मनसि तेजसि तेऽज सितद्युतिद्युमणिवृन्दसमे हि समेयुषि ।
अपि सुधर्मतया मतया सतां किमु शचीशतया शतयागतः ॥ ३५ ॥

हे अज, सितद्युतयः श्वेता ये द्युमणयो दिव्यरत्नानि तेषां वृन्दैः समूहैः समे तुल्ये ते तव तेजसि मनसि समेयुषि समागते सति सतां मतया मान्यया सुधर्मतया शोभनाचरणत्वेनापि किमु । शतयागतोऽश्वमेधशतेन कृत्वा शचीशतया इन्द्रत्वेनापि किमु । न किमपीत्यर्थः । यदि हरितेजो मनस्यायातं तदा सर्वे धर्माः कृता इत्यर्थः ॥

भवति यत्र भवैकभयापहं भवदनुस्मरणं समये क्वचित् ।
अखिलपर्वसु चारुकराङ्गुलीकलितपर्वत पर्व तदेव मे ॥ ३६ ॥

चारुभिः कराङ्गुलीभिः कलितो धृतः पर्वतो गोवर्धनो येन तत्संबुद्धौ हे हरे, अखिलपर्वसु सर्वेषूत्सवेषु मे मम तदेव पर्व उत्सवः । तत्किम् । यत्र क्वचित्समये भवैकभयापहं संसारसाधारणभीतिनिवर्तकं भवदनुस्मरणं भवति । त्वत्स्मृतिरेवोत्सव इत्यर्थः । 'पर्व प्रस्तावोत्सवयोर्ग्रन्थौ विषुवदादिषु' इति कोषः ॥

अनरिचक्रकथाप्रथितार्थया वसुधया सुधयाप्यथ किं तया ।
हरिपदस्मृतिरेव हि केवला हृदि वसेद्दिवसे दिवसे यदि ॥ ३७ ॥

यदि दिवसे दिवसे प्रत्यहं हरिपदस्मृतिरेव केवला हृदि वसेत् तर्हि नास्ति अरिचक्रस्य रिपुसमूहस्य कथा यत्र । प्रथितो विपुलोऽर्थो धनं यत्र । ततः कर्मधारयः तया च वसुधया किम् । तथा तया प्रसिद्धया सुधया अमृतेनापि किम् । हरिस्मृतौ सत्यामिहामुत्र भोगैः किमित्यर्थः ॥

अयि वराह वराहवनिर्जितेऽमितबले तव लेखकुलद्विषि ।
कनकचक्षुषि का स्तुतिरम्भसो धृतवतो धरणीमपि दंष्ट्रया ॥ ३८ ॥

अयीति संबोधने । हे वराह, अमितबले बहुशक्तौ लेखकुलस्य देवसमूहस्य द्विषि शत्रौ कनकचक्षुषि हिरण्याक्षे वराहवे श्रेष्ठयुद्धे निर्जिते सति अम्भसः प्रलयजलाद्दंष्ट्रया धरणीमुद्धृतवतस्तव का स्तुतिः ॥

यतो नम्रं नैव प्रणमति परं कंचन शिरः
　करौ कस्याप्यग्रे न जगति युतौ यत्र च युतौ ।
वपुः पन्नं नाधः पतति कृतिनां माधव पुन-
　र्मुदेऽनन्तायै नः प्रणतिरियमस्तु त्वयि कृता ॥ ३९ ॥

हे माधव, यतस्त्वयि नम्रं शिरः परमन्यं कंचन नरं न प्रणमति । यत्र त्वयि युताव-ञ्जलीकृतौ करौ जगति कस्याप्यग्रे न युतः न युक्तौ भवतः । 'यु मिश्रणे' लट् । यत्र त्वयि पन्नं पतितं वपुः कृतिनां पुण्यवतामधो नरके न पतति । तस्मिंस्त्वयि कृतेयं प्रणतिर्नो-ऽस्माकमनन्तायै मुदे पूर्णसंतोषायास्तु ॥

स एवाहं पापी कृतदुरितकोटीपरिणति-
प्रभूतापत्तापत्रयरयशयस्त्वच्छरणधीः ।
स एव त्वं सत्त्वं भजसि भजदार्तिं शमयितुं
गुणातीतं ब्रह्माच्युत वितर तस्मान्मयि दयाम् ॥ ४० ॥

कृता या दुरितकोटी पापौघस्तत्परिणतेः परिपाकात्प्रभूता उत्पन्ना यद्वा परिणति-भूता या आपत्कष्टं तापत्रयमाध्यात्मिकादि च तयो रये जवे शेते तथाविधः । अत एव त्वच्छरणधीस्त्वदेकशरणबुद्धिः पापी स एवाहम् । हे अच्युत, गुणातीतं ब्रह्म भज-तामार्तिं पीडां शमयितुं सत्त्वं सत्त्वगुणेनावतारं रामकृष्णादिकं भजसि । तस्मान्मयि दयां वितर देहि ॥

अपीदं चेतो मे हरिचरितपीयूषलहरी-
परीरम्भाभोगप्रसृमरमहानन्दसुभगम् ।
अपीयं जिह्वा मे नरकरिपुनामव्यसनिनी
भवेदद्धा बद्धाञ्जलि शयसरोजद्वयमिदम् ॥ ४१ ॥

हरेश्चरितमेव पीयूषलहरी अमृतोर्मिस्तत्परीरम्भाभोगेनास्वादाधिक्येन प्रसृमरः प्रसरण-शीलो यो महानन्दस्तेन सुभगं भाग्यवदिदं मे चेतो भवेद्भवतु । मे जिह्वापि नरकरिपोर्हरेर्ना-मव्यसनिनी नामोच्चारणपरास्तु । इदं शयसरोजद्वयं पाणिपद्मयुगलं अद्धा साक्षाद्बद्धाञ्जलि कृताञ्जलि भवेत् ॥

शिवः स वः सवभुवः पावनावनवद्धवः ।
अवत्ववभवत्पीवभावलावण्यविच्छवः ॥ ४२ ॥

इति श्रीपुरुषोत्तमकृतायां विष्णुभक्तिकल्पलतायां स्वाभिप्रायप्रकाशनो नाम
तृतीयः स्तबकः ।

स शिवो वो युष्मानवतु । किंभूतान्वः । सवभुवः । 'षू प्रसवे' । 'ऋदो रप्' । सवं जन्म भवन्ते प्राप्नुवन्ति ते सवभुवः । 'भू प्राप्तौ' आत्मनेपदी । अस्मात्क्विप् । शिवः कीदृशः । पावनं शुद्धिः, अवनं रक्षणं, ते विद्येते यत्र स पावनावनवान् ईदृशो हवो यजनं यस्य । यस्य यजने शुद्धिः शत्रुभ्यो रक्षा च भवतीत्यर्थः । 'हवस्तु सप्ततन्तौ स्यान्निदेशाह्वानयोरपि' इति कोषः । तथा अवभवतां(?) नम्रीभवतां पीवा स्थौल्यं यस्मात्सोऽवभवत्पीवा यं नमतां

महत्त्वं भवतीत्यर्थः । भावस्याभिप्रायस्य लावण्यं सौन्दर्यं विद्यते येषां ते भावलावण्यवन्तः शुद्धाभिप्रायास्तेभ्यः शं सुखं वाति ददाति गमयति वा स तथा । ततः कर्मधारयः ॥

इति श्रीमहीधरविरचिते विष्णुभक्तिकल्पलताविवरणे स्वाभिप्रायप्रकाशनो नाम तृतीयः स्तबकः ।

---

## चतुर्थः स्तबकः ।

रक्षन्तु वो हरिभुजाः प्रतिबिम्बभाजो
वक्षःस्थलस्थिरमणीरमणीयभासि ।
क्षीराम्बुधावभिनवा इव पारिजाता
जाताः समस्तजगतामभिलाषपूर्त्यै ॥ १ ॥

वक्षःस्थले स्थिरा या मणिः कौस्तुभः । 'रत्नं मणिर्द्वयोः' इत्यमरः । तस्या रमणीया मनोहरा या भाः कान्तिस्तस्यां प्रतिबिम्बभाजः प्रतिफलिता अत एव समस्तजगतां त्रिलोकानामभिलाषपूरणाय क्षीरसमुद्रे जाता अभिनवाः पारिजाता इवेत्युत्प्रेक्षा । हरिभुजा वो युष्मान् रक्षन्तु । कौस्तुभस्य सितत्वात्क्षीराम्बुध्युपमानम् ॥

पादारविन्दं पुरुषोत्तमस्य तमस्यगाधेऽभिनिमज्जतां नः ।
नखप्रभानिर्जितसोमशोभमशोभनं सर्वमपाकरोतु ॥ २ ॥

नखकान्त्या जिता चन्द्रप्रभा येन ईदृशं हरेः पादपद्ममगाधेऽपारे तमसि संसाराज्ञानेऽभितो निमज्जतामस्माकं सर्वमशोभनं पापमपाकरोतु निवर्तयतु ॥

भावाभिधायां निशि येन मोहदुःस्वप्नदौःस्थ्यात्सपदि प्रबोधः ।
संपद्यते कोऽपि स चित्तरङ्गः श्रीरामचन्द्रे यदि चित्तरङ्गः ॥ ३ ॥

श्रीरामचन्द्रे यदि चित्तरङ्गो मनःप्रीतिः स्यात्, तदा स प्रसिद्धः कोऽप्यवर्णनीयश्चितो ज्ञानस्य तरङ्ग ऊर्मिः संपद्यते । येन ज्ञानोर्मिणा संसाररूपरात्रौ मोह एव दुःस्वप्नस्तेन यद्दौःस्थ्यं दुःखं तस्मात्संपदि प्रबोधो भवति । संसारान्निवर्तेत इत्यर्थः ॥

मन्दारमालाभरसादरं यन्नाशं निजायुर्निखिलं नयन्ति ।
मन्दारमालाभरसादरं तन्न चन्द्रचूडं परितोषयन्ति ॥ ४ ॥

यद्यपि मन्दा मूर्खा रमालाभरसाद्धनलाभलोभेन सर्वे निजमायुररमत्यर्थं नाशं नयन्ति व्यर्थमायुर्व्ययं कुर्वन्ति । तत्तदपि मन्दारकुसुममालानां भरेऽतिशये सादरं सप्रीतिं चन्द्रचूडं शिवं न परितोषयन्ति न भजन्ति ॥

अगोचरो यत्तु मनोरथानां तुष्टे शिवे वस्तु तदप्यवाप्यम् ।
यद्दर्शनाय स्पृहयन्ति देवाः सोऽभूत्प्रभुर्भूतलभूतलभ्यः ॥ ५ ॥

यद्वस्तु मनोरथानामगोचरोऽविषयः, यस्य च वस्तुनो दर्शनाय देवाः कामयन्ते, तदपि वस्तु शिवे हरे तुष्टेऽवाप्यम् । स प्रभुर्भूतलस्य भूतैर्नरैर्लभ्योऽभूत् । इत्याश्चर्यमित्यर्थः ॥

जीवा यदूत्तमपदानि यदृच्छयैव
यन्तो रजोभिरमलैः परिरब्धदेहाः ।
नेहाप्नुवन्नवतरं बत कीटकाद्याः
पाद्यार्घ्यदानविधिना विधिनार्चितास्ते ॥ ६ ॥

बतेति हर्षे । कीटकाद्याः क्रिम्याद्या जीवा यदृच्छयैव यदूत्तमस्य कृष्णस्य पदानि पादन्यासस्थलानि यन्तो गच्छन्तोऽतुलैरनुपमै रजोभिः पादपांसुभिः परिरब्धदेहा व्याप्ताङ्गाः सन्त इह संसारेऽवतरं जन्म नाप्नुवन् न प्रापुः ते जीवा विधिना ब्रह्मणा पाद्यार्घ्ययोर्दानविधानेन पूजिताः । विधिपूजायोग्यतां प्राप्ता इत्यर्थः ॥

तीर्थाधिके सति सदा सुलभे समन्ता-
च्चेतोहरे हरिचरित्रसुधासमुद्रे ।
लोकं मिमङ्क्षुमपि पावयति प्रसिद्धे
का भीतिरन्तकभवा भुवि मुक्तिभाजाम् ॥ ७ ॥

तीर्थेभ्यो गङ्गादिभ्योऽधिकपावने मिमङ्क्षुं मज्जन्तमपि लोकं पावयति तारयति सदा सुलभे चेतोहरे मनोहारिणि हरिचरित्रमेवामृतं तत्समुद्रे सति भुवि मुक्तिभाजामन्तकभवा यमप्रकृतिका का भीतिः । न कापीत्यर्थः ॥

गोविन्दपादार्चनचातुरीयं सद्यः पदं यच्छति तत्तुरीयम् ।
तदत्र चेतो भव सावधानं भवामयेऽन्यौषधमप्रधानम् ॥ ८ ॥

हरिपादपूजायां चातुर्यं तत्प्रसिद्धं तुरीयं पदं ब्रह्मपदं यच्छति । तत्तस्मात् हे चेतः, अत्र हरिपादार्चने सावधानं तत्परं भव । यतो भवामये संसाररोगेऽन्यत् हर्यर्चनं विना औषधमप्रधानं मुख्यं न भवति ॥

यो गीयते जगति दुर्दमयातुकालः
श्रीरामनाम जपतो मम यातु कालः ।
शीतांशुचारुवदनां रिपुरोधमाप्तां
सीतां शुचा विरहितामिह यश्चकार ॥ ९ ॥

यो रामो जगति दुर्दमानां दुष्टानां यातूनां यातुधानानां रक्षसां कालो नाशको गीयते जनैः तस्य रामस्य नाम जपतः सतो मम कालः समयो यातु गच्छतु । 'कालः पुनः कृष्णवर्णे महाकालकृतान्तयोः । सरणानेहसोः' इति कोषः । यश्चन्द्ररम्यास्यां रावणगृहे रोधं प्राप्तां सीतां शुचा शोकेन विरहितां हीनां चकार ॥

उच्चैस्तरां सारजनित्वकर्त्री संपत्स्यते सा रजनिः कदा नु ।
यस्यां जपन्तो नरसिंहनाम पापं जनुः कोटिकृतं हनाम ॥ १० ॥

उच्चैस्तरामतिशयेन सारा श्रेष्ठा जनिर्जन्म येषां ते सारजनयः उत्तमजन्मानस्तद्भावकर्त्री सा रजनी रात्रिः कदा नु संपत्स्यते भविष्यति यस्यां रात्रौ हरिनाम जपन्तो वयं जनुषां जन्मनां कोटिभिरपि कृतं पापं हनाम निवर्तयाम । हन्तेर्लोट् ॥

त्वत्प्रेरितेन मयका कृतमद्य याव-
त्किंचिच्छुभाशुभमथापि तथा करोमि ।
मज्जन्मनः सफलतां कुरुषे न कस्मा-
न्मज्जन्मनः सरिति विष्णुपदस्थितायाम् ॥ ११ ॥

हे मनः, त्वत्प्रेरितेन मयका मया । 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इत्यकच् । अद्ययावदेतद्दिनपर्यन्तं किंचिच्छुभाशुभं पुण्यपापं कृतम् अथ तथा तद्वत्करोम्यपि । अतो विष्णुपदस्थितायां सरिति गङ्गायां मज्जत् मज्जनं कुर्वत्सत् मज्जन्मनो मम जनेः सफलतां साफल्यं कस्मान्न कुरुषे । हरिपदे स्थित्वा मज्जन्म सफलं कुर्वित्यर्थः ॥

यत्प्रेर्यमाणमनिशं जनिशङ्कितेन
रे दुष्टमानस मया समया मुकुन्दम् ।
नैव प्रयासि कतमो बत मोक्षमार्गो
दृष्टो विहाय तमतर्कितमद्वितीयम् ॥ १२ ॥

रे दुष्टमानस, जनेः सकाशाज्जन्मपरम्परायाः शङ्कितेन भीतेन मया अनिशं निरन्तरं प्रेर्यमाणमपि त्वं मुकुन्दं समया मुकुन्दस्य समीपे न प्रयासि नैव गच्छसि यतः अतो बतेति खेदे अद्वितीयं सजातीयत्वगतभेदरहितमतर्कितं तं विहाय कतमो मोक्षमार्गस्त्वया दृष्टः ॥

बद्धे भवत्यसुमतामतिमात्रबन्धो
मुक्ते तु मुक्तिरिति चित्त तवातिशक्तिः ।
बन्धे तु ते व्यसनिता न तथास्ति मुक्तौ
तद्बद्धमेव भव केशवकेलिषु त्वम् ॥ १३ ॥

हे चित्त, भवति त्वयि बद्धे सति असुमतां प्राणिनामतिमात्रमत्यन्तं बन्धः त्वयि मुक्ते तु तेषां मुक्तिः । इति तवातिशक्तिरत्यन्तं सामर्थ्यं यस्मात्ते तव तु यथा व्यसनिता सक्तिरस्ति तथा मुक्तौ न । तत्तस्मात् केशवकेलिषु हरिलीलासु बद्धमेव भव ॥

एकं क्षणं हृदय तिष्ठसि चेदनन्ते
तद्दुस्तरोऽपि भवनीरनिधिर्न किंचित् ।

नोचेदनेकविधदुःसहदुःखकोटी-
कल्लोललङ्घितमुपैषि दशामशुभ्राम् ॥ १४ ॥

हे हृदय, चेदेकं क्षणमनन्ते तिष्ठसि तर्त्तार्हि दुस्तरोऽपि भवनीरनिधिः संसारसागरो न किंचित्कर इत्यर्थः । नो चेद्धरिस्मरणाभावेऽनेकविधानां दुःसहानां दुःखानां कोटयोऽसंख्या ये कल्लोलास्तैर्लङ्घितमाक्रान्तं सदशुभ्रां दुष्टां दशामुपैषि प्राप्नोषि ॥

गोविन्दपादोदकबिन्दुरिन्दुः किं दुर्निवार्यं न तमो निहन्ति ।
निपीय पीयूषरसोत्तमं तमन्तर्महः पश्य महत्तमं तत् ॥ १५ ॥

गोविन्दचरणोदकबिन्दुरूपश्चन्द्रो दुर्निवार्यं किं तमो न निहन्ति सर्वं हन्त्येव । अमृतरसादप्युत्तमं तं पादोदकबिन्दुं पीत्वा तत्प्रसिद्धं महत्तमं महस्तेजोऽन्तर्विलोकय ॥

श्रीवासुदेवं हृदयं नयन्ति न यन्ति ते गर्भभुवं जनन्याः ।
पदं तमेकं भज केशवस्य शिवस्य नान्यो निधिरस्ति लोके ॥ १६ ॥

ये नरा हरिं हृदयं नयन्ति प्रापयन्ति स्मरन्ति ते मातुर्गर्भभूमिं न यन्ति न गच्छन्ति । तत्तस्मादेकं शिवस्य कल्याणकारिणः केशवस्य पदं भज । लोकेऽन्यो निधिर्नास्ति । 'विधिः' इति पाठे शिवस्य कल्याणस्यान्यो हरिपादभजनव्यतिरिक्तो विधिः प्रकारो नास्ति । हरिसेवयैव कल्याणाप्तिरिति भावः ॥

अन्ते विमुञ्चत खवर्गविधेयताशां
न्याय्यो नृसिंहकृपयैव किलापवर्गः ।
मुञ्चालमित्यवगहो न हरीति शब्दं
वक्षःस्थलस्पृशि बकी शिवकीर्तनेऽपि ॥ १७ ॥

हे जन्तवः, अन्तकाले खवर्गविधेयताशामिन्द्रियवश्यत्वाभिलाषं मुञ्चत । विषयाभिलाषं त्यजतेत्यर्थः । यतो नृसिंहकृपयैवापवर्गो न्याय्यः । किल यतो बकी पूतना शिवकीर्तने कल्याणरूपं कीर्तनं यस्य तस्मिन्हरौ वक्षःस्थलस्पृशि हृदयस्थेऽपि सति अलं मुञ्चेत्यवक् उवाच । वक्तेर्लुङि रूपम् । हरीति शब्दं नोवाच । तस्मादन्ते इन्द्रियवश्यत्वाभावादिदानीमारभ्यहरिः स्मर्तव्यः ॥

यो देवकीमिव बकीमपि विश्वयोनिः
स्वीयं निनाय पदमुज्ज्वलयैव मत्या ।
सर्वापराधशमनं कमलालयायाः
को न श्रयेत कमनं कमनन्तमिच्छन् ॥ १८ ॥

यो हरिर्देवकीमिव पूतनामपि उज्ज्वलया बुद्ध्या स्वीयं पदं निनाय तं सर्वापराधनिवर्तकं रमायाः कमनं कान्तमनन्तं कं सुखादिपदार्थमिच्छन्को न श्रयेत न सेवेत ॥

नायं नयो नयन यन्न यदूत्तमस्य
नित्यं निभालयसि निर्मलमङ्घ्रियुग्मम्।
किं वीक्षितैरवरवस्तुभिरप्रशस्तो-
दर्कैर्मनोहरतरैरपि भाविभङ्गैः ॥ १९ ॥

हे नयन नेत्र, हरेर्निर्मलं पदयुग्मं न निभालयसि न विलोकयसि न श्रयसि अयं नयो नीतिर्न भवति। अवरवस्तुभिरीक्षितैः किं न किमपि। कीदृशैः। अप्रशस्त उदर्क उत्तरकालो येषां तैः। तथा मनोज्ञैरपि भावी भङ्गो येषां तैः ॥

गोविन्दमेव स्तुहि वस्तु हित्वा समस्तमन्यद्रसने स नेड्यः।
लोकत्रये कस्य पदस्य दास्यं पुरंदरत्वादपि सुप्रशस्यम् ॥ २० ॥

हे रसने, अन्यत् समस्तं वस्तु त्यक्त्वा गोविन्दमेव स्तुहि स्तुतिं कुरु। यद्यस्माल्लोकत्रये स कस्य नेड्यः न स्तुत्यः। अस्य हरेर्दास्यं पुरंदरत्वादिन्द्रपदादपि सुप्रशस्यं प्रशस्ततरमतस्तं स्तुहि ॥

त्वमन्यशब्दग्रहतां विहाय श्रवः शृणु श्रीपतिशीलशब्दम्।
श्रुतीति शब्दस्त्वयि चागमे च समत्वमभ्येति यतो गुणौघैः ॥ २१ ॥

हे श्रवः कर्ण, अन्यशब्दग्राहित्वं त्यक्त्वा श्रीपतिं शीलयत्यभ्यस्यति तादृशं हरिवाचकं शब्दं शृणु। यतः श्रुतिरिति शब्दस्त्वयि वेदे च गुणौघैस्तुल्यतामेति ॥

दुःखाकरोषि यदरे यदुवंशरत्न-
सेवारतानविरतं विधितामुपेत्य।
दुष्कर्म किं न विदितस्तव कैटभारि-
र्यन्नाम जन्मशतसंचितपापहारि ॥ २२ ॥

अरे हीनसंबोधने। हे दुष्कर्म, हरिभक्तिपरायणान् विधितां दैवत्वमुपेत्य प्राप्य यद्दुःखाकरोषि पीडयसि। दुःखात्प्रातिलोम्ये डाच्प्रत्ययः। तव किं कैटभारिर्हरिर्न विदितो न ज्ञातः। यस्य नाम जन्मनां शतेन संचितं पापं हरतीत्येवंशीलम् ॥

मिथ्यामनोरथपथि प्रथितानुभाव
रे मोह को हरिपरेऽपि तव प्रसङ्गः।
बालातपे तिमिरमिच्छति खेलितुं चे-
त्सौख्यं लभेत कतरच्छ्रुतरत्नवेदि ॥ २३ ॥

मिथ्यैव मनोरथमार्गे प्रथितः ख्यातोऽनुभावो महिमा यस्य तादृश हे मोह, हरिपरे विष्णुभक्तेऽपि तव कः प्रसङ्गः का प्रसक्तिः। किं सुखं यास्यसीत्यर्थः। अर्थान्तरमाह—

चेद्यदि बालातपेऽन्धकारं क्रीडितुमिच्छति तर्हि किं सौख्यं लभेत । न किमपीत्यर्थः किं-भूतं सौख्यम् । श्रिता रत्नवेदिर्येन तादृशम् ॥

एकं मुकुन्दं हृदये स्मरामि स्मरामितेनालमितः श्रमेण ।
न द्योततेऽजस्रकृतेऽपि यत्ने खद्योततेजस्तरणेः पुरस्तात् ॥ २४ ॥

एकं मुकुन्दं हृदये स्मरामि अतो हे स्मर काम, इतो मयि अमितेन बहुलेन श्रमेणालं पूर्यताम्। दृष्टान्तमाह—तरणे रवेः पुरस्तात् खद्योततेजो निरन्तरं यत्ने कृतेऽपि न द्योतते॥

संकल्पकल्लोलमगम्यसीमं जायादियादोभिरतीव भीमम् ।
कर्मोदकं त्वां न तृणाय मन्ये चतुर्भुजे चित्तमिते भवाब्धे ॥ २५ ॥

हे भवाब्धे संसारसमुद्र, चतुर्भुजे चित्तमिते प्राप्ते त्वां तृणाय न मन्ये तृणतुल्यं न गण-यामि । 'मन्यकर्मण्यनादरे' इति चतुर्थी । कीदृशं त्वाम् । संकल्पा एव कल्लोलास्तरङ्गा यस्य तम् । अगम्या दुष्प्रापा सीमा मर्यादा यस्य तम् । जाया स्त्री तदादय एव यादांसि जलजन्तवस्तैः कृत्वा अतिभयंकरम् । कर्माण्येवोदकानि यत्र तम् ॥

संसारसत्रे षडमी अमित्रा मदादयो मामदया लुठन्ति ।
आशा तवैवास्ति चराचराणामाधार राधावर धाव रक्ष ॥ २६ ॥

यतः संसारवने अमी मदादयः षडमित्राः शत्रवो निर्दयाः सन्तो मां लुठन्ति । 'लुठ चौर्ये' । 'कामक्रोधौ लोभमोहौ तत्परं मदमत्सरौ । षडमी रिपवो ज्ञेयाः संसाराब्धौ निम-ज्जताम् ॥' इति शारदोक्तेः । अतो हे स्थावरजङ्गमानामाधार, हे राधावर, तवैव आशास्ति अतस्त्वं धाव मां रक्ष ॥

संपापसंकल्पमलीमसेऽपि मनस्यनन्त स्मृतिमेषि मे यत् ।
स्वामी दयालुर्भवता समः कः को वापराधी मम साम्यमेति ॥ २७ ॥

सम्यग्यः पापसंकल्पस्तेन मलिने मनसि हे अनन्त, चेत्त्वं स्मृतिमेषि प्राप्नोषि तर्हि तवो-चितमिति शेषः । यतो भवता समः को दयालुः स्वामी । अपराधी को वा मम साम्यमेति । अतोऽहं त्वयैवानुकम्प्य इति भावः ॥

कृष्ण त्वदीयं चरणारविन्दं चेतोहरं चेतसि चिन्तयन्तः ।
सन्तः पदं तत्समवाप्नुवन्ति ब्रह्मादयोऽपि स्पृहयन्ति यस्मै ॥ २८ ॥

हे कृष्ण, सन्तः साधवश्चेतोहरं मनोहरं त्वदीयं पादाब्जं चित्ते चिन्तयन्तः सन्तस्त-त्पदं प्राप्नुवन्ति यस्मै पदाय ब्रह्मादयोऽपि स्पृहयन्ति । 'स्पृहेरीप्सितः' इति संप्रदानत्वा-च्चतुर्थी ॥

येषां न माता न पिता न बन्धुर्न सोदरो नापि धनं न विद्या ।
न ते गुणा नापि शरीरशक्तिस्तेषां त्वमेवाच्युत सर्वमेव ॥ २९ ॥

येषां जनानां मातृपितृबन्धुसहोदरधनविद्याः न, ते प्रसिद्धा विनयादयोऽपि गुणा न, नापि देहसामर्थ्यं हे अच्युत, तेषां सर्वं त्वमेव ॥

केऽयू रमावर नराश्चरणप्रणत्या
न ब्रह्मणः पदमदभ्रदयावतस्ते ।
केयूरभूषितकरेण कृताभयस्य
कृत्वापि पातकमतर्कितशक्तिभाजः ॥ ३० ॥

हे रमावर श्रीपते, के नरा जनास्तव चरणनमनेन पातकं कृत्वापि ब्रह्मपदं नायुर्न प्रापुः । यातेर्लुङि रूपम् । किंभूतस्य ते । अदभ्रदयावतो बहुदयायुक्तस्य । 'अदभ्रं बहुलं बहु' इत्यमरः । केयूरेणाङ्गदेन भूषितो यः करस्तेन कृताभयदानस्य । तथा अतर्कितां शक्तिं भजतीति तस्य ॥

अत्यन्तविह्वलमिदं विषयाङ्कुशैर्य-
दाकृष्यते भृशमुदग्रभवान्तकेन ।
गोपीमनोहर मनोऽहरहर्मदीयं
त्वत्पादपङ्कजपरागसरागमस्तु ॥ ३१ ॥

हे गोपीमनोहर, मदीयं मन उदग्रो यो भवान्तकः संसाररूपोऽन्तकस्तेन विषयाङ्कुशैः शब्दादिरूपसृणिभिरहरहः प्रत्यहमाकृष्यते ततोऽत्यन्तविह्वलमिदं तव चरणकमलपरागे स-प्रेमास्तु । ततो दुःखाभाव इत्यर्थः ॥

लक्ष्मीनिवास जनजीवन दीनबन्धो
बन्धोऽयमुत्कटतमो भवसंभवो मे ।
त्वन्मन्त्रनामजपतोऽस्तु तदस्य नाशो
नाशोचिता त्रिभुवने त्वयि केन कर्तुम् ॥ ३२ ॥

हे राधावर, हे जनानां जीवन, हे दीनबन्धो, मे मम भवसंभवः संसारोत्थ उत्कटस्त-मस्तीव्रतरोऽयं बन्धोऽस्ति तत्तस्मात्त्वन्मन्त्रान्नामानि च जपतो ममास्य बन्धस्य नाशो-ऽस्तु । मन्त्राश्च नामानि च तेषां समाहारो मन्त्रनाम । त्रिभुवने त्वयि केन पुंसा आशा कर्तुं नोचिता ॥

गोविन्द गङ्गातुलसीतरङ्गत्तरङ्गमालामिलितं मदीयम् ।
मनस्त्वदीये चरणारविन्दे तापत्रयत्रासविमुक्तमस्तु ॥ ३३ ॥

हे गोविन्द, मदीयं मनस्त्वदीये पादपद्मे वर्तमानमत एव गङ्गायास्तुलस्या सह तरङ्-न्ती चञ्चला या तरङ्गमाला तया मिलितमतस्तापत्रयादाध्यात्मिकादेर्यस्त्रासस्ततो विमु-क्तमस्तु ॥

गोपालबाल बलवत्तरकालकोप-
लोपाय कोऽपि नहि कायवतामुपायः।
एकं विहाय महनीयमुदग्रदुःख-
संघातघातचतुरं चरणाम्बुजं ते ॥ ३४ ॥

हे गोपालबाल नन्दशिशो, महनीयं पूज्यमुत्कृष्टदुःखसंघातानां घाते नाशे चतुरमेकं ते चरणाम्बुजं विहाय कायवतां प्राणिनां बलवत्तरस्यातिशक्तस्य कालकोपस्य लोपाय नाशाय कोऽप्युपायो नह्यस्ति ॥

पादाम्बुजन्म भजतामज तावकीनं
दीनार्तिभञ्जनशुभं जनदुःखहन्तः।
आयान्तु यान्तु दिवसा भवसागरोऽपि
यस्मिन्परागति परा गतिरस्त्यवश्यम् ॥ ३५ ॥

हे अज, तावकीनं पादाम्बुजन्म पादपद्मं भजतां नोऽस्माकं दिवसा आयान्तु यान्तु। कीदृशम्, दीनानामार्तिभञ्जने दुःखनाशे शुभं समर्थम्। जनानां दुःखं हरतीति। यस्मिन्पादपद्मभजने भवसागरोऽपि पराग इवाचरति जलकणवद्भवति। परागात्क्विप्। यतस्त्वमवश्यं निश्चितं परा गतिरसि ॥

कर्मानुरूपजनियुक्ततया न यामि
त्वत्पादसेवनसुधालहरीविहारम्।
यस्मिन्ननेहसि विना स्मरणेन तत्र
दीने मयि स्वयमनन्त दया विधेया ॥ ३६ ॥

हे अनन्त, यस्मिन्ननेहसि समये। 'कालो दिष्टोऽप्यनेहापि' इत्यमरः। कर्मानुरूपजनियुक्ततया दैवयोग्यजन्मवत्त्वेन त्वत्पादसेवनमेव या सुधालहरी अमृतोर्मिस्तत्र विहारं क्रीडां न यामि। त्वां न सेव इत्यर्थः। तत्र तस्मिन्काले त्वत्स्मरणेन विना वर्तमाने मयि स्वयं त्वया दया विधेया कार्या ॥

कुरु मे परमेश्वर प्रियं हृदये संनिवसन्सुनिश्चलम्।
हर पातकवृत्रमत्रसत्प्रभयाप्यन्य(र्क)भुवा यदत्र सत् ॥ ३७ ॥

हे परमेश्वर, मे हृदये सुनिश्चलं संनिवसन् प्रियं कुरु। किं प्रियमत आह—यदन्य(र्क)भुवा रव्युत्थया प्रभया अत्रसदभीतं तत्पातकवृत्रं पापान्धकारम्। 'वृत्रो दैत्येऽन्धकारे च' इति कोषः। अत्र हृदि सद्वर्तमानं हर नाशय ॥

मयि पापिनि कापि निष्कृतिर्न तव ध्यानमृते रमापते।
किमु कर्दमलेपितं वपुर्विमलं वारि विनापि जायते ॥ ३८ ॥

हे रमापते, पापिनि मयि तव ध्यानमृते विना कापि निष्कृतिः प्रायश्चित्तं नास्ति। तत्र दृष्टान्तः—कर्दमेन लेपितं वपुर्जलं विना विमलं जायते किमु। न जायत इत्यर्थः॥

अयि मानसमच्युत क्षणं कुरु कारुण्यगुणानुगुम्फितम्।
सदया हि भवन्ति साधवः कलयन्तः किल दीनवेदनाः॥ ३९॥

अयीति संबोधने। हे अच्युत, मे मानसं चित्तं कारुण्यगुणानुगुम्फितं दयायुक्तं क्षणं कुरु। कारुण्यमेव गुणस्तेन गुम्फितं ग्रथितम्। हि यतः साधवो दीनानां वेदनाः कलयन्तो जानन्तः सन्तः सदया भवन्ति किल॥

स्वयं भवाब्धिः स्वयमेव नेता स्वयं सतां तारयिता नृसिंहः।
स्वयं च सौहार्दनिधिः स्वयं नौः सर्वात्मना तेन तमेव सेवे॥ ४०॥

हे नृसिंह, त्वं स्वयमेव भवाब्धिः संसाररूपः समुद्रः। नेता संसारप्रसारकोऽपि स्वयम्। तस्मात्तारयितापि स्वयम्। सौहार्दस्य दयाया निधिः स्वयम्। नौरूपः स्वयम्। तेन हेतुना सर्वात्मना सर्वभावेन तं त्वामेव सेवे॥

हे लक्ष्मीवर हेलया[2] लयमयुर्मायाविनो दानवाः
कुर्वन्तस्त्वयि वैरमेव विरता वेदोदिताद्वर्त्मनः।
जीवा ये तु निरन्तरं नवनवानन्दास्तवैव स्तवै-
स्तेषां दर्शनमात्रमप्यनुचितं किं देव तन्मादृशाम्॥ ४१॥

हे लक्ष्मीपते, वेदप्रोक्ताद्वर्त्मनो मार्गाद्विरता निवृत्तास्त्वयि वैरमेव कुर्वन्तो दानवा मायाविनो हेलया अनायासेन त्वयि लयमयुः प्रापुः। 'हे दयालय ययुः' इति पाठे लयमिति शेषः। तर्हि ये तु जीवास्तत्र स्तवैः स्तोत्रैर्निरन्तरं नवनवानन्दा अत्यन्तानन्दयुक्तास्तेषां मादृशां दर्शनमात्रमप्यनुचितं किम्॥

सेवे देव तवैव पादकमलं कल्याणकोटीकुलं
श्रीमद्रक्ततलं परीष्टिपरतो लक्ष्मीकरात्कोमलम्।
यद्दीव्यत्तुलसीदलं सुरसरित्कल्लोलकौतूहलं
कैवल्यैकफलं नखावलिविभाविध्वस्तमायाबलम्॥ ४२॥

इति श्रीपुरुषोत्तमकृतायां विष्णुभक्तिकल्पलतायां भक्त्युपद्रवनिराकरणो नाम चतुर्थः स्तबकः।

---

१. अस्मात्प्राक् 'दुरवस्थतरं दयानिधे किमु नालोकयसे नृसिंह माम्। भवदीयपदाम्बुजद्वयीस्मरणालम्बनमात्रजीवनम्॥' इदं पद्यं पुस्तकान्तरेऽधिकमस्ति. २. 'हे दयागृह ययु' इति च पाठः. ३. अस्मादनन्तरम् 'भवदावानलज्वालाविह्वलस्त्वत्पदाम्बुजे। लभतां मन्मनोभृङ्गः स्वर्धुनीमधुनि स्थितिम्॥' इति पद्यं पुस्तकान्तरेऽधिकमस्ति.

हे देव, ईदृशं यत्तव पादपद्मं तदहं सेवे भजे । कीदृशम् । कल्याणकोट्याः कुलं गृहम् । श्रीमत् शोभायुक्तं रक्तं तलं स्वरूपं यस्य । परीष्टिः सेवा तत्परात्तदासक्ताल्लक्ष्मीकरादपि कोमलम् । दीव्यन्ति शोभमानानि तुलसीदलानि यत्र । सुरसरितो गङ्गायाः कल्लोलैः कौतूहलमुत्सवो यत्र । कैवल्यं मुक्तिरेवैकं फलं यत्र । नखावलिविभया नखपङ्क्तिशोभया विध्वस्तं मायाबलं येन ॥

इति श्रीमहीधरविरचिते विष्णुभक्तिकल्पलताविवरणे भक्त्युपद्रवनिराकरणो नाम चतुर्थः स्तबकः ।

---

## पञ्चमः स्तबकः ।

लक्ष्मीलावण्यलीलारसविसरसरः साधु पेपीयमानं
दृग्भ्यां साक्षान्मुरारेर्दिनकररजनीकामुकाभ्यां करौघैः ।
कृष्णत्वं यद्विपाकादलभत सितमप्यस्य वर्ष्म प्रभाम्भो-
धाराभिर्निर्यदेतद्भवतु भवदवज्वालजालप्रशान्त्यै ॥ १ ॥

प्रभालक्षणाभिरम्भोधाराभिर्निर्यत्प्रसरणशीलम् । तथा दिनकररजनीकामुकाभ्यां सूर्यचन्द्रलक्षणाभ्यां दृग्भ्यां मुरारेर्नेत्राभ्यां करौघैः किरणसमूहैः साधु यथा तथा साक्षात् पेपीयमानमत्यन्तं दृश्यमानम् । ईदृशमेतत् लक्ष्म्या माया लावण्यलीलयोः सौन्दर्यक्रीडयो राजसतामसरूपयोर्यो रसविसरः प्रेमप्रसरः स एव सरस्तटाको भव एव दवाग्निस्तस्य ज्वालाजालं ज्वालासमूहस्तस्य प्रशान्त्यै नाशाय भवतु संसारतापं शमयतु । एतत्किम् । यद्विपाकाद्यत्परिणामेन । यत्संसर्गादिति यावत् । सितं शुद्धसत्त्वात्मकमपि अस्य हरेर्वर्ष्म शरीरं कृष्णत्वं श्यामतामलभत प्राप ॥

नीत्वा नाकनितम्बिनीनयनयोः पीयूषपानायते
मत्वा मङ्गलमातनोति मरुतामास्थाय सुत्रामताम् ।
जानीते जगदीशितुर्यदतुलं जन्तुर्जपित्वा पदं
तन्नारायणनाम काममभिमतां सिद्धिं न दत्ते सताम् ॥ २ ॥

तत् हरेर्नाम सतां कामिष्टां सिद्धिं न दत्ते । सर्वामपि दत्त इत्यर्थः । तत्किम् । जन्तुर्यन्नाम नीत्वा प्राप्य । श्रुत्वेत्यर्थः । नाकनितम्बिनीनयनयोरप्सरोनेत्रयोः पीयूषपानायते अमृतपानवदाचरति । अप्सरसां भोगयोग्यो भवति । यन्नाम मत्वा ज्ञात्वा मननं कृत्वा सुत्रामतामिन्द्रत्वमास्थाय मरुतां देवानां मङ्गलं विस्तारयति । यन्नाम जपित्वा निदिध्यासनं कृत्वा जगदीशितुर्हरेरतुलं पदं ब्रह्मस्वरूपं जानीते । साक्षात्कारो भवतीत्यर्थः ॥

यद्दूरीकुरुते भवान्धतमसं यस्य प्रकाशोऽक्षरं
तद्ब्रह्मैव परं यदत्र ददते लिप्साधिकं लीलया ।

यस्यानेकगुणानलं न नलिनोद्भूतोऽपि वक्तुं विभु-
स्तत्किं पामर रामरत्नमनिशं हृद्येव न स्थाप्यते ॥ ३ ॥

हे पामर अधम, तद्रामरत्नमनिशं निरन्तरं हृद्येव किं न स्थाप्यते । तत्किम् । यद्रामरत्नं भवान्धतमसं संसारगाढध्वान्तं दूरीकुरुते निवर्तयति । 'ध्वान्ते गाढेऽन्धतमसम्' इत्यमरः । अक्षरमविनाशि तत्प्रसिद्धं परं ब्रह्मैव यस्य रामरत्नस्य प्रकाशः किरणौघः । अत्र संसारे यद्रामरत्नं लीलया अनायासेनैव लिप्साधिकं वाञ्छाधिकं ददते । 'दद दाने' । विभुः प्रभुरपि नलिनोद्भूतः कमलजो ब्रह्मापि यस्यानेकगुणान्वक्तुं नालं न समर्थः ॥

यज्ञस्तम्भवति कृता वसुमती तेनाखिला संयुगे
सुप्तं तेन सपत्नदर्पदलनोद्दामप्रतिष्ठावता ।
वित्तं वेदविदे व्यतारि विधिवद्ब्रह्मार्पणन्यायतः
कंसध्वंसकृतः कृतः कृतधिया येन प्रणामः सकृत् ॥ ४ ॥

तेन प्राणिना अखिला वसुमती भूर्युपयुक्ता कृता । सपत्नानां शत्रूणां दर्पदलने गर्वापहारे उद्दामा बह्वी प्रतिष्ठा यस्येदृशेन तेन संयुगे रणे सुप्तम् । तेन च ब्रह्मार्पणन्यायेन वेदविदे विधिवद्वित्तं व्यतारि दत्तम् । येन कृतधिया कुशलेन सकृदेकवारमपि कंसध्वंसकृतो हरेः प्रणामः कृतः ॥

धन्या धर्मधुरंधरेण धरणी तेनोर्ध्वलोकाधिका
माता तस्य कृतार्थतामुपगता वीतापदः पूर्वजाः ।
तस्मिँल्लोचनमार्गमागतवति प्रायेण पापक्षयो
यस्योदारमतेर्नरस्य रमते चित्ते मुरस्य द्विषन् ॥ ५ ॥

तेन पुंसा धर्मधुरंधरेण धर्मभारवोढ्रा ऊर्ध्वलोकाधिका स्वर्गलोकाधिका धरणी धन्या । अमुष्य पुंसो माता कृतार्थतां प्राप्ता । पूर्वजाश्च तस्य वीतापदो गतदुःखाः । तस्मिन्प्रायेण लोचनमार्गमागतवति दृष्टे पापक्षयो भवति । उदारमतेर्महाबुद्धेर्यस्य नरस्य चित्ते मुरस्य द्विषन् हरी रमते ॥

चेतो यस्य जनार्दने जनमनःपीयूषपानाधिक-
ध्यानानन्दपदे निरस्तनिखिलद्वैतप्रतिष्ठास्पदे ।
किं तस्यारिभिरुद्धतैः किमथवा विघ्नैः कुलैर्वापदां
किं पापेन किमन्तकेन बलिना दैवेन वा तस्य किम् ॥ ६ ॥

जनमनसाममृतपानादधिको यो ध्यानानन्दस्तस्य पदे स्थानभूते । तथा निरस्तं निखिलं द्वैतप्रतिष्ठाया आस्पदं येन तादृशे जनार्दने यस्य चेतस्तस्योद्धतैरारिभिः किम् । अथवा

४

विघ्नैः किम् । आपदां कुलैर्वा किम् । किं पापेन । किमन्तकेन यमेन । बलवता दैवेनापि वा किम् । न किमपीत्यर्थः ॥

यस्य स्वान्तमनन्ततो न चलितं लीलावतीलोचनै-
रुच्चैः सूचितनिश्चलप्रियतया बालस्य वालिङ्गनैः ।
सारस्फारतयाथवातिबलवद्दारिद्र्यदावानल-
ज्वालाभी रिपुभीतिभिश्च पुरुषो धन्यः स एव क्षितौ ॥ ७ ॥

एतैः पदार्थैर्यस्य स्वान्तं मनोऽनन्ततो हरेः सकाशान्न चलितं क्षितौ धरायां स एव धन्यः पुमान् । कैरित्यत आह—लीलावतीकटाक्षैरुच्चैः प्रकाशं सूचिता कथिता या निश्चलप्रियता स्थिरप्रियवाक्यं आ जन्मावधि तव लक्षहेममुद्राः अनेन दातुं प्रतिश्रुतेत्यादि तेनापि । तथा पुत्रालिङ्गनैः । तथा स्मार उपतापः । 'स्मृ शब्दोपतापयोः' । घञ्प्रत्ययः । तस्य स्फारतया बाहुल्येन । 'स्फारस्तु करकादीनां बुद्बुदे विपुलेऽपि च' इति कोषः । तथातिबलवान्यो दारिद्र्यदावानलस्तस्य ज्वालाभिः । तथा शत्रुभीतिभिरपि । एतैर्हरौ स्थिरमना धन्यः ॥

पीयूषं परिहाय हायमधमस्तृष्णाभिभूतो जनः
कूपं काङ्क्षति पङ्कसंकुलमलं दैवेन निर्वञ्चितः ।
हित्वा हृद्गतमेव देवमतुलानन्दप्रदं केशवं
भूतेष्वात्महिताय ताम्यति मतित्यक्तो हि संसारिषु ॥ ८ ॥

हा इति खेदे । अयं तृष्णाभिभूतोऽधमो जनोऽमृतं त्यक्त्वा पङ्कव्याप्तं कूपं वाञ्छति । यतो दैवेन वञ्चितः । कथं तदाह—अतुलानन्ददायिनं हृदयस्थं केशवं देवं त्यक्त्वा मतित्यक्तो निर्बुद्धिः सन् संसारिषु भूतेष्वात्महिताय ताम्यति ग्लायति ॥

तावद्दैन्य मदन्यतो न भवतो गन्तव्यमव्याहता-
नन्दं नन्द दरिद्र दुःसहतरं दुःखं च तावद्ददत् ।
तावद्गर्जतु दुर्जनो मम विपद्बुद्ध्या रणत्कारकृ-
द्यावन्मामवलोकते न कृपया कृष्णः कृतायां स्तुतौ ॥ ९ ॥

स्तुतौ कृतायां कृष्णो मां यावन्नावलोकते हे दैन्य, तावद्भवतस्त्वया मदन्यतो न गन्तव्यम् । 'कृत्यानां कर्तरि वा' इति भवत इति कर्तरि षष्ठी । हे दरिद्र, त्वमपि तावद्दुःसहतरं दुःखं ददत्सत् अव्याहतानन्दं यथा तथा नन्द । किं च दुर्जनो मम विपद्बुद्ध्या रणत्कारकृत् हसन् गर्जतु । हरिणा मय्यवलोकिते दैन्यादयोऽकिंचित्करा इति भावः ॥

मातर्मेदिनि देवकीतनयतामासाद्य देवो दया-
सिन्धुः सिन्धुरलीलया त्वयि पदन्नातानतानीत्तु यान् ।

एकं तच्चरणारविन्दमधुनो वाह्लभ्यलभ्याल्लवं
दत्त्वा मुक्तिदमाशु मह्यमनिशं मद्धारमुक्ता भव ॥ १० ॥

हे मातर्मेदिनि, दयार्णवो देवो हरिर्देवकीपुत्रत्वं प्राप्य त्वयि विषये यान्पदन्नाता-न्पादन्यासमूहानतानीद्विस्तारयामास गजलीलया वाह्लभ्यलभ्यात्स्नेहप्राप्यात्तच्चरणारविन्दमधु-नस्तत्पादाब्जपरागादेकं मुक्तिदं लवं दत्त्वा मद्धाररहिता भव। तस्मिन्दत्तेऽहं मुक्तः स्याम् ततस्ते मद्धारहीनतेति भावः॥

यद्भीमावरजो रजोधिकमनाः संन्यासिवेषं दध-
त्कन्यामेकतमः समस्तसुभटश्रेणीशिरःशेखरे।
गर्जत्येव बलेऽवलेपविधुरो हृत्वा सुभद्रामगा-
न्नागोऽनन्तवशंगतो जयति सा नारायणस्वामिता ॥ ११ ॥

रजोगुणव्याप्तमना भीमानुजोऽर्जुनो यतिवेषं धारयन्नेक एवावलेपविधुरं गर्वहीनं यथा तथा निर्गर्व एव सन् समस्तसुभटश्रेण्याः शिरःशेखरीभूते बलभद्रे गर्जत्येव सति अन-न्तस्य हरेर्वशंगतः सन्सुभद्रां हृत्वा अगात् आगोऽपराधं तु नागान्न प्राप। सा हरिस्वा-मिता जयति। हरेर्भक्तत्वादिति भावः॥

कारागारगता हृतामरमुदो भौमस्य यद्भीरवो
भर्तारं भगवन्तमन्तकभयातङ्कापहं लेभिरे।
यद्वृत्तिश्चतुराननस्य नितरां यद्दास्यमेवेहते-
ऽप्यैकाग्र्यं कलितस्मृतेर्विजयते सोऽयं प्रसादः प्रभोः ॥ १२ ॥

हृता अमराणां मुदो येन ईदृशस्य भौमस्य नरकासुरस्य कारागृहस्था भीरवो नार्यः। 'नारी भीरुर्भामिनी कामिनी च' इति हलायुधः। अन्तकोत्पन्नमातङ्कं भयमपहन्ति तं नरकभीतिहर्तारं हरिं भर्तारं यल्लेभिरे प्रापुः। ऐकाग्र्यं यथा तथा कलिता स्मृतिर्येन तस्य निरन्तरस्मरणशीलस्य चतुर्मुखस्य मनोवृत्तिर्यद्दास्यमेवेहते चेष्टते सोऽयं प्रभोः प्रसादो विजयते॥

कंसः किं सुकृतं चकार भगिनीं कारागृहे योऽरुण-
ज्जामेयानपि जघ्निवान्पितुरभूत्सौराज्यसर्वंकषः।
अन्यत्तस्य किमुच्यते तदपि मामेष क्षयं नेष्यती-
त्यत्यन्तस्मृतकेशवः शिवतमं तस्याश्रमं जग्मिवान् ॥ १३ ॥

कंसः किं पुण्यं चकार, न किमपि। यतो भगिनीं देवकीं कारागृहे योरुणद्धरोध, जामेयान् 'जामिः स्वसृकुलस्त्रियोः' तदपत्यानि जामेयास्तान् जघान, पितुरुग्रसेनस्य सौराज्यं सर्वं कषति बलाद्गृह्णाति तादृशोऽभूत्। 'करीषकूलसर्वाभ्रेषु कषः' इति खश्प्र-

त्ययः । तस्य कंसस्यान्यत्पापं किमुच्यते । यद्यप्येतादृशः, तदप्येष कृष्णो मां क्षयं नाशं नेष्यति मारयिष्यतीति भयेनात्यन्तं स्मृतः केशवो येन सः कंसः शिवतमं यद्धाम ब्रह्माख्यं तज्जग्मिवान् प्राप । ईदृशो हरिस्मरणप्रभाव इत्यर्थः ॥

ना रायः स्मरणं करोति हि यथा नारायणस्य प्रभो-
रेवं चेत्कुरुते कलामपि तदा दारिद्र्यदारि द्रुतम् ।
प्राप्य श्रीकरुणाकटाक्षकलनाकल्याणमक्षुद्रया
संपत्त्यैलविलं विलङ्घ्य विलसत्याचन्द्रतारं सुखी ॥ १४ ॥

ना पुमान् यथा रायो धनस्य स्मरणं करोति तथा कलां लेशमपि यदि नारायणस्य हरेः स्मृतिं करोति तदा श्रीयुक्तो यः करुणाकटाक्षस्तत्कलनया दारिद्र्यनाशकं कल्याणं मङ्गलं प्राप्याक्षुद्रया महत्या संपत्त्या ऐलविलं कुबेरम् । 'यक्षैकपिङ्गैलविलश्रीदपुण्यजनेश्वराः' इत्यमरः । अतिक्रम्य आचन्द्रतारं कल्पान्तपर्यन्तं सुखी विलसति ॥

गङ्गे संनिहितासि संततमपि श्रीकृष्णपादाम्बुजे
लक्ष्मि त्वं ललनाललाम लभसे लावण्यमस्योरसि ।
प्रेमा तस्य च मातरस्ति तुलसि त्वय्युत्तरस्तत्कथं
विज्ञप्तिर्न विधीयते करुणया मद्दुःखविध्वंसिनी[1] ॥ १५ ॥

हे गङ्गे, त्वं हरिचरणे निरन्तरं निकटासि । हे लक्ष्मि, ललनानां नारीणां ललाम स्त्रीरत्नभूता त्वमस्य हरेरुरसि लावण्यं शोभां लभसे । हि तुलसि मातः, तस्य हरेः प्रेमा त्वय्यधिकोऽस्ति । तर्हि करुणया कृत्वा मम दुःखनाशिनी विज्ञप्तिर्भवतीभिः किं न क्रियते । सर्वथा मम दुःखनाशाय हरिर्विज्ञपनीय इति भावः ॥ 'ललामवल्ललामश्च शृङ्गे चिह्नपताकयोः । रम्ये प्रधाने भूषायां पुण्ड्रे पुच्छप्रभावयोः' ॥

अन्तश्चिन्तयतामनन्तमनिशं श्वासा निवासाः श्रियो
जन्तूनां यति यन्ति यागयुगलैस्ते तुल्यतां तन्वते ।
स्पर्धन्ते मृडमौलिमण्डननदीवीचीभिरुच्चैः पुनः
पावित्र्येण भवाम्बुदव्युदसनोद्दामैकदेशौजसः ॥ १६ ॥

नित्यं चित्ते हरिं स्मरतां प्राणिनां श्रियः शोभाया निवासा आधारभूता यति यावन्तः (?) श्वासा यन्ति गच्छन्ति । ते यागयुग्मैः सादृश्यं कुर्वते । हरिं स्मरतां प्रतिश्वासं यागद्वयफलमित्यर्थः । किं च ते श्वासाः शिवस्य मौलेर्मण्डनभूता या नदी गङ्गा तद्वीचीभिः सह पावित्र्येण स्पर्धन्ते । कीदृशाः—भवाम्बुदस्य संसारमेघस्य व्युदसने नाशे

१. 'मे दुःख' ख.

उद्दाममुत्कटमेकदेशौज एकभागस्थं तेजो येषाम् । येषामेकदेशस्थं तेजः संसारमेघं शमयति ॥

मुक्त्वा माधवसेवनं मतिमता मन्तव्यमन्तव्यथाः
　किंचिद्वारयितुं समर्थमपरं पुण्यं न लोकत्रये ।
संतप्ते तपतीव्रतापतपनप्रद्योततो भूतले
　तापं हर्तुमलं विना जलधरं दृष्टः कुतः केन कः ॥ १७ ॥

लोकत्रये एकं हरिसेवनं मुक्त्वान्ते मरणे या व्यथास्ता वारयितुं समर्थमपरं किंचित्पुण्यं मतिमताम् । कर्तरि षष्ठी । पुंसां न मन्तव्यम् ॥ तत्र दृष्टान्तः—तपे ग्रीष्मे तीव्रस्तापो यस्य तपनस्य भानोः प्रद्योततः प्रद्योतेनातपेन संतप्ते भूतले मेघं विना तापं हर्तुं केन कः कुतो दृष्टः । न केनापि न कोऽपीत्यर्थः । तथा हरिसेवां विनान्तपीडानाशकं किमपि नास्तीति भावः ॥

धातुप्रत्यययोगतो रचयितुं रूपाणि लोकत्रये
　विद्वांसो विविधा विधातुरधिकं धीकौतुकं तु प्रभोः ।
संख्यालोपसमासकालपदभिल्लिङ्गादिभावान्वितं
　रूपं प्रत्यययोजनाविरहितैर्निर्माति यो धातुभिः ॥ १८ ॥

धातुर्भूवादिः, प्रत्ययस्तिबादिः, तयोर्योगाद्रूपाणि भवत्यादीनि रचयितुं लोकत्रये विद्वांसो बुधा विविधा वर्तन्ते । परं तु विधातुः कर्तुः प्रभोरीशस्य हरेस्तु धीकौतुकं बुद्धिविख्यातिरधिकम् । तदेवाह—यो विधाता प्रत्ययोजनाविरहितैर्ज्ञानसंबन्धशून्यैरचेतनैः । जडैरिति यावत् । धातुभिर्महाभूतैः संख्यैकत्वादिः, लोपो नाशः, समासः समर्थनम्, कालः समयोऽवस्थादिकः, पदभिद्वस्तुभेदः, लिङ्गादि स्त्रीत्वादि, भावो जन्म, एतैर्युक्तं रूपं मनुष्यपश्वादि निर्माति करोति ॥ 'धातू रसादौ श्लेष्मादौ भ्वादौ ग्रावविकारयोः । महाभूतेषु लोकेषु शब्दादाविन्द्रियेऽस्थनि ॥' इति कोषः ॥ 'कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि । पारम्पर्यागते ख्याते मङ्गलोद्वाहसूत्रयोः ॥' इति च ॥ 'कालः कृष्णे महाकाले कृतान्ते समये मृतौ ।' 'पदं स्थाने विभक्त्यन्ये शब्दे वाक्येऽङ्कवस्तुनोः ।' 'भेदो विदारणे वेधे उपजापविशेषयोः ।' 'लिङ्गं पुंस्त्वादिचिह्नयोः । शिवमूर्तावनुमाने सांख्योक्तप्रकृतावपि' इति च ॥ 'भावोऽभिप्रायवस्तुनोः । स्वभावजन्मसत्तात्मक्रियालीलाविभूतिषु । चेष्टायोन्योर्बुधे जन्तौ शृङ्गारादेश्च कारणे । शब्दवृत्तिहेतौ च ।' 'समासः स्यादैकपद्ये संक्षेपे च समर्थने ॥

तस्मिन्नसितयाभिभूतहृदया रूपे कृतप्रत्यया
　मन्दाः केऽपि तदाशयैकशरणा दम्भादयो दस्यवः ।

बाधन्ते बुधबोधबन्धुरविधिव्याषेधिमेधाविनो
लोकं कोकमिवानिवार्यविपदं यामा निशामाश्रिताः ॥ १९ ॥

तस्मिन्देहे स्मितयाहंभावेनाभिभूतं पराभूतं हृदयं यैस्ते रूपे आकारे नरादिके एव कृतः प्रत्ययो विश्वासो यैस्ते, मन्दा दुष्टास्तेषां जन्तूनामाशयश्चित्तमेकं शरणं येषां ते, तथा बुधानां ज्ञानिनां बोधाय ज्ञानप्राप्तये समीचीनो यो विधिः प्रकारः श्रवणादिस्तद्व्याषेधिनी ज्ञानप्रकारनिवर्तिका मेधा बुद्धिर्येषां ते कामदम्भादयो दस्यवश्चौरा अनिवार्यविपदमसाध्यकष्टयुक्तं लोकं बाधन्ते पीडयन्ति ॥ अत्र दृष्टान्तः—यथा निशामाश्रिता यामा रात्रिप्रहराः कोकं चक्रवाकं बाधन्ते। तद्वद्देहमाश्रिताः सन्तो ज्ञानं बाधन्त इत्याशयः ॥

मज्जन्तु प्रबलप्रतापनिहतानेकैनसि न्यायतो
निर्णीते निगमैर्नरा भवपराभूताः सुतीर्थान्तरे।
मज्जन्तुस्तु मधुद्विषः पदनखप्रेङ्खत्प्रभामण्डली-
पूरस्फारतरङ्गसंगमचमत्कारोत्सवं गाहते ॥ २० ॥

संसारपीडिता नराः शास्त्रैर्निर्णीते प्रबलप्रतापेन निहतान्यनेकान्येनांसि पापानि येन तादृशे तीर्थान्तरे प्रयागादौ मज्जन्तु स्नान्तु। मज्जन्तुरहमेव जन्तुस्तु मधुद्विषो हरेः पदनखानां प्रेङ्खन्ती या प्रभामण्डली कान्तिपटली तस्याः पूरस्य स्फारा वृद्धा ये तरङ्गास्तेषा संगम एव चमत्कारोत्सवस्तं गाहते हरिचरणभक्तिमेव गाहते ॥

लक्ष्मीभर्तरि भक्तिमेव भजतां यज्जायते जन्मिनां
मानैश्वर्यमरातिभीतिरकुलस्फीतिः प्रतिष्ठाच्युतिः।
नासीरः स समग्रसंपदुदधेर्वह्नेर्यथा सूचको
धूमः स्यात्प्रथमो यथोपनिषदः पूर्वैव भूमिर्भिदाम् ॥ २१ ॥

हरौ भक्तिं भजतां जन्मिनां प्राणिनां यदानैश्वर्यमसामर्थ्यम्, अरातिभीतिः शत्रुभयम्, अकुलस्फीतिः कुलवृद्धेरभावः, प्रतिष्ठानाशः, इत्यादि दुःखं जायते, स समस्तसंपदुदधेः सर्वहर्षस्योत्पत्तेर्नासीरः सेनामुखम्। हरिभक्तौ क्रियमाणायां दुःखाविर्भावः सुखप्रागभावतया ज्ञेय इत्यर्थः। तत्र दृष्टान्तः—वह्नेस्तेजसो यथा प्रथमो धूमो जायते। यथा चोपनिषदोऽद्वैतप्रतिष्ठापिकायाः पूर्वा आदौ पूर्वपक्षत्वेन भिदां भूमिर्भेदप्रतिपादनम् ॥

गङ्गासागरसंगमः सुमहितं काशीतलं शीतलं
दाहाय प्रबलैनसो न सरितः शेषा विशेषार्थदाः।
यस्य ध्यानमृते तमच्युतमहं हृत्कुञ्जकण्ठीरवं
कुर्वे यत्पदवीक्षणेन पदवी दृश्यैव मुक्त्यद्भुता ॥ २२ ॥

गङ्गासमुद्रसंगमः, शीतलं सुमहितं पूज्यं काशीतलम्, विशेषार्थप्रदाः शेषाः सरितो

यमुनाद्याः, एते यस्य हरेर्ध्यानं विना प्रबलपातकनाशाय न भवन्ति, तं हरिं हृदयलक्षणकुञ्जे कण्ठीरवं सिंहं कुर्वे हृदि स्थापयामि । यत्पददर्शनेन मुक्त्वा कृत्वाद्भुता या पदवी मुक्तिपदं दृश्यैव भवति । यस्य चरणभजनेन साक्षात्कारो भवतीत्यर्थः ॥

द्रव्येणापि विना भवन्ति सुलभान्यम्भांसि भूमीतले
प्राप्याः पादपपल्लवाः प्रभुरपि प्रौढप्रतापोऽच्युतः ।
स्यादेवार्चितयार्चयार्चिततरस्तस्मिन्भवेदर्चिते
मोक्षो मङ्क्षु मुमुक्षितस्य नियतं तत्र प्रमाणं श्रुतिः ॥ २३ ॥

द्रव्यं विना भूतले जलानि सुलभानि, वृक्षपल्लवाः पूजार्थं प्राप्याः, प्रभुर्हरिरपि प्रौढप्रतापः, अर्चया प्रतिमया पूजितयाप्यच्युतोऽर्चिततरोऽत्यन्तं पूज्यः स्यात् । तस्मिन्हरौ पूजिते मुमुक्षितस्य मोक्षेच्छोर्मङ्क्षु शीघ्रं मोक्षो भवेत् । नियतं निश्चितं तत्र श्रुतिर्वेद एव प्रमाणम् ॥

मार त्वं मृदुमानसानपि मुनीन्मृद्नासि यन्मार्गणै-
स्तेन त्वज्जनकोऽपि कोपितमनास्त्वद्वृत्ततो वर्तते ।
यद्याता यमयातनां तनुभृतस्त्वामाश्रितास्त्वत्त्यजो
नीता लोकमशोकमत्रभवता नारायणेन ध्रुवम् ॥ २४ ॥

हे मार काम, त्वं कोमलचेतसोऽपि मुनीन्बाणैर्यत्पीडयसि, तेन हेतुना त्वद्वृत्ततस्त्वदाचरणेन त्वत्पिता हरिः क्रुद्धचित्तो वर्तते । मयि हरेः कोपः कथं ज्ञातः, तत्राह—यतस्त्वामाश्रिताः कामरता जना यमपीडां प्राप्ताः । त्वत्त्यजो निष्कामा जना अत्रभवता पूज्येन हरिणाशोकं मोक्षं प्रापिताः, । अतो ध्रुवं ज्ञायते हरिस्त्वयि कुपितः ॥

लक्ष्मि त्वं यदपीपलः पलभुजः पौलस्त्यपूर्वानमू-
नक्षीणैर्विभवैरशूशुष ऋषीनप्यन्नतृप्तिं विना ।
मातुस्तेऽनुचितं समस्तजगतामेतच्चिरं चिन्तयँ-
ल्लङ्कायां पुरि शासनं तव धवश्चक्रे भवन्राघवः ॥ २५ ॥

हे लक्ष्मि पौलस्त्यपूर्वानमून्रावणादीन्पलभुजो राक्षसान्पूर्णैर्विभवैः समृद्धिभिस्त्वं यदपीपलः पालितवत्यसि । ऋषीन्विश्वामित्रादीनन्नतृप्तिं विना शूशुषः शोषितवत्यसि । सर्वजगतां मातुस्तवैतद्रक्षःपालनमृषिशोषणं चानुचितम् । एतच्चिरं चिन्तयंस्तव धवस्तव भर्ता रामो भवँल्लङ्कायां तव शासनं शिक्षणं चक्रे ॥

तत्र युक्तिमाह—

नोचेदेष दशास्यतामनुभवन्यादो भवाम्भोनिधे-
र्लङ्केशः क्व गिरामगोचरतरस्त्वद्वल्लभो वा कुतः ।

तस्येच्छामपहाय कस्त्रिभुवने हर्तुं जनस्त्वामलं
तन्मातः कथमीदृशं पुनरपि प्रारभ्यते प्रस्तुतम् ॥ २६ ॥

चेद्यद्येवं न स्यात्तर्हि दशास्यतां रावणभावमनुभवन्संसारसमुद्रस्य यादो जलजीवभूतो लङ्केशो रावणः क्व, गिरां वाचामगोचरतगोऽत्यन्तमविषयस्तव भर्ता रामः क्व । महदन्तरमनयोः । तस्य रामस्येच्छां विना त्रैलोक्ये त्वां हर्तुं हे मातः को वा समर्थो न कोऽपीत्यर्थः । तत्तस्मादीदृशं प्रस्तुतमुपक्रान्तं पुनरपि कथं प्रारभ्यते । पापिपालनं धर्मिशोषणं च न कर्तव्यमित्यर्थः ॥

त्वं मूलप्रकृतिः पुराणपुरुषो नारायणोऽयं विधु-
र्वह्निस्त्वं स च बिन्दुरिन्दुवदने नादात्मकं ते वपुः ।
मातः किं बहुना चराचरमिदं जातं युवाभ्यां यत-
स्तस्मादौदरपुत्रवन्निजतया पोष्यं विभेदं विना ॥ २७ ॥

हे मातरिन्दुवदने चन्द्रमुखि, त्वं मूलप्रकतिरादिमाया, अयं नारायणः पुराणपुरुषः, अयं विधुश्चन्द्रस्त्वम्, अग्निर्हरिः, बिन्दुस्तव वपुर्नादात्मकं नादरूपम् । किं बहुना । इदं स्थावरजङ्गमं युवाभ्यां लक्ष्मीनारायणाभ्यां जातम् । तस्माद्भेदं त्यक्त्वौरसपुत्रवन्निजतया स्वीयत्वेन विश्वं पोष्यं पोषणीयम् ॥

तत्त्वं मातरनन्तमन्तरनिशं निध्यायतामायता-
वालोक्य स्थितिमेनमेव समया देवं दयासागरम् ।
अप्येतन्न विचिन्तयस्यधिजगत्येते दरिद्रार्दिता
दत्त्वा पर्यनुयोगमच्युतपरा मां ह्रेपयिष्यन्ति यत् ॥ २८ ॥

हे मातः, तस्मात्त्वमन्तश्चित्तेऽनन्तं नितरां ध्यायतां स्मरतामायतावुत्तरकाले दयासमुद्रमेनं देवं हरिं समया हरिसमीपे स्थितिमालोक्य तन्न चिन्तयसि । किं तच्चिन्तनीयम्, अत आह—दरिद्रार्दिता[1] एते हरेरग्रे पर्यनुयोगमुपालम्भनं दत्त्वा मां ह्रेपयिष्यन्ति । तस्माद्भक्तेभ्यो दारिद्र्यं दूरीकार्यमित्यर्थः ॥

मातर्मङ्गलदेवते मधुरया दृष्ट्या मनुष्या मुदा
वीक्ष्यन्ते भवदीक्षिताः शतमखीभावाय ते दीक्षिताः ।
दोषस्तेषु गुणायते रिपुरपि प्रायेण मित्रायते
व्यालो रज्जवति क्षितिस्त्रिदिवति क्षोणीपतिर्दासति ॥ २९ ॥

हे कल्याणदेवते मातः, ये मनुष्या मधुरया कृपायुक्तया दृष्ट्या मुदा त्वया वीक्ष्यन्ते ते भवसंसारे दीक्षिताः संसारिणः संसरणदीक्षां प्राप्ताः सन्तः शतमखीभावायेन्द्रत्वभवनाय दी-

१. दरिद्रेति भावप्रधानो निर्देशः.

क्षिता भवन्ति । तेषु च दोषोऽपि गुणायते, रिपुरपि बाहुल्येन मित्रवदाचरति, व्यालः सर्पो रज्जवति रज्जुवदाचरति, क्षितिः पृथ्वी त्रिदिवति स्वर्गवदाचरति, क्षोणीपती राजा दासवदाचरति । गुणायते, मित्रायते, इत्यत्र क्यङ् । रज्जवतीत्यादौ क्विप् ॥

अप्येकक्षणमेधि रे मधुकरः श्रीमन्मधुद्वेषिणः
पादाम्भोजयुगे धिगेव कमलाकाङ्क्षावशः क्लिश्यसि ।
यद्भूताभ्युदयाय भूरिविभवैराविर्भवेद्भार्गवी
भक्त्या भर्तु····रसाधुभिरभिप्रायैः परैः पूर्यताम् ॥ ३० ॥

रे जन्तो, एकक्षणमपि श्रीमतो मधुसूदनस्य पादाब्जयुग्मे मधुकरो भ्रमर एधि भव । तव कमलाया लक्ष्म्या आकाङ्क्षया यदाकुलत्वं तद्धिगस्तु । यतो सा भार्गवी भृगुपुत्री लक्ष्मीर्भर्तुर्हरेर्भक्त्यैव भूतानामभ्युदयायाविः प्रकटा भवेत् । अतः परैरन्यैरसाधुभिरभिप्रायैः पूर्यताम्, अन्येऽभिप्राया न कार्या इति भावः ॥

दूरं याहि दरिद्र[2] दीर्णहृदयं दौर्भाग्य भङ्गं भज
व्याधे लावणसैन्धवीषु लहरीष्वापद्यतां निह्नवः ।
शेषं भ्रंशमुपैतु युष्मदुपमं नारायणाराधने
वैयग्र्यं व्यपहाय[3] लग्नमनसो जाता वयं सर्वथा ॥ ३१ ॥

हे दरिद्र, दीर्णे स्फुटितं हृदयं यस्येदृशं सत्त्वं दूरं याहि । हे दौर्भाग्य, नाशं प्राप्नुहि । हे व्याधे रोग, त्वया लवणसिन्धोरिमा लावणसैन्धव्यः । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धिः । क्षाराब्धिसंबन्धिनीषु लहरीषु निह्नवो लय आपद्यतां प्राप्यताम् । रोगेण क्षाराब्धौ पतितव्यमित्यर्थः । शेषमनुक्तं युष्मदुपमं भवत्सदृशं दुःखभयादिकं भ्रंशं नाशमुपैतु । यतो वयं वैयग्र्यं व्यग्रत्वं त्यक्त्वा सर्वांशेन कृष्णाराधने लग्नचित्ता जाताः, अतो दरिद्रादिभिर्मयि न स्थेयमिति भावः ॥

दयालुर्देव त्वं क इव हृदयालुस्त्वदपरो
रमा यस्यादेशोत्सवभवनवानन्दलहरी ।
अधर्मो यन्नाम्ना विलयमयते माधव सदा
तदप्येतत्सीदत्यहह भुवनं त्वत्कपितृकम् ॥ ३२ ॥

हे देव माधव, त्वं दयालुः । त्वदन्यो हृदयालुः कृपावान्क इव, न कोऽपीत्यर्थः । रमा लक्ष्मीर्यस्य तवादेश आज्ञैवोत्सवस्तदुत्पन्ना नवा आनन्दलहरी हर्षपरम्परा यस्याः सा । लक्ष्मीर्यस्याज्ञाकारिणीत्यर्थः । यस्य तव नाम्ना अधर्मो नाशमाप्नोति । तदप्येवं सत्यपि त्वं पिता यस्येदृशं भुवनमहह इत्याश्चर्ये सीदति दुःखं प्राप्नोति । त्वयि नाथे दुःखं न घटत इत्यर्थः ॥

---

१. 'किमेव क. २. दरिद्रेति भावप्रधानो निर्देशः. ३. 'व्यवहाय' क.

प्रमोदाय प्रायः प्रभवतु वधूनेत्रनलिनो-
ल्लसल्लक्ष्मीलीलाकमलमधुपश्रेणिसुभगः ।
कटाक्षः केषांचित्कृतसुकृतसंघातवशतो
हरिध्यानं हित्वा मम किमपि नायाति हृदये ॥ ३३ ॥

वध्वा नेत्रपद्म उल्लसन्ती शोभमाना या लक्ष्मीस्तस्या यल्लीलाकमलं तत्र या मधुपश्रेणिर्भ्रमरपङ्क्तिस्तद्वत्सुभग एवंविधः कटाक्षः सुकृतसंघातः पुण्यसमूहस्तद्वशात्प्रायः केषांचित्प्रमोदाय सुखाय प्रभवतु । नायं कटाक्षः, किं तु पद्मालया इमा वधूनेत्रे पद्मं निवसति, तद्धस्ते लीलाकमलमस्ति, तत्र भ्रमरपङ्क्तिः सैवेयमिति भावः । एवं केचित्त्रियाः सुखमनुभवन्तु । मम तु हृदये हरिध्यानं त्यक्त्वा किमपि नायाति ॥

मुरारातिर्भाति श्रुतिमुकुटमाणिक्यकिरणा-
वलीभिर्व्याश्लिष्यच्चरणनखचन्द्रद्युतिचयैः ।
भजज्जन्तुस्वान्तोत्कटकुहरतो मोहतिमिरं
निरस्यन्नीरन्ध्रैर्हृदि यदि तदिष्टं किमितरत् ॥ ३४ ॥

श्रुतेर्मुकुटभूतोपनिषत्तदेव माणिक्यं रत्नं तस्य किरणपङ्क्तिभिर्व्याश्लिष्यन्तः संबध्नन्त उपनिषत्प्रतिपाद्या ये चरणनखास्त एव चन्द्रास्तेषां नीरन्ध्रैर्निबिडैर्द्युतिचयैः कान्तिपुञ्जैः कृत्वा भजतां जन्तूनां स्वान्तं चित्तमेवोत्कटं कुहरं गर्तं तस्मान्मोहान्धकारं निरस्यन्निवर्तयन्मुरारिर्यदि हृदि भाति तर्त्तर्हि इतरदन्यदिष्टं किम्, न किमपि । हरिध्यानाधिकं सुखं नास्तीत्यर्थः । अज्ञाननाशके हरौ हृदि भाति सति कृतार्था भवन्तीति भावः ॥

यच्छक्यं नैव वाचंयमविमलमनः संपरित्यज्य बद्धुं
नैर्गुण्यादेव बन्धं व्रजति पुनरहो न प्रसङ्गाद्गुणानाम् ।
यस्मिन्बद्धे विमुक्तिर्भवति तनुभृतां यत्त्रिलोक्याममूल्यं
कौशल्यागर्भरत्नं मम हरतु तमःस्तोममत्यद्भुतश्रि ॥ ३५ ॥

यद्रामरत्नं वाचंयमानां मुनीनां विमलं मनस्त्यक्त्वा बद्धुं नैव शक्यम् । यच्च मनसो नैर्गुण्यादेव संबन्धं याति, न तु गुणानां विषयाणां प्रसङ्गात्सेवया । यस्मिन्बद्धे प्राणिनां मुक्तिर्भवति । यच्च त्रिलोक्याममूल्यमत्यन्तमाश्चर्यकारिणी श्रीर्यस्य तन्निर्मूल्यं कौशल्यागर्भरत्नं रामरत्नं मम तमःस्तोममन्धकारसमूहं हरतु । अज्ञाननिवृत्तिं करोत्वित्यर्थः ॥

ये जन्मान्तरपर्युदञ्चनवशादायान्ति जायादितां
जीवास्तेष्वपि मातृशासितमिदं चेतो ममत्वाकुलम् ।
सर्वेषां हि न तत्कथं तनुभृतां चौरेष्वपीदृग्रसं
तेऽप्येवं भवितार एव धिगिमां चेष्टां विवेकोज्झिताम् ॥ ३६ ॥

ये प्राणिनो जन्मान्तरेऽन्यजन्मनि यत्पर्युदञ्चनमृणम्। 'ऋणं स्यात्पर्युदञ्चनम्' इति कोषः। तद्वशाज्जायादितां स्त्रीपुत्रपौत्रादिभावमायान्ति। मातृशासितं मूर्खम्। 'मूर्खः स्यान्मातृशासितः'। इदं चेतस्तेष्वपीदृग्रसं पुत्रादिसमस्नेहाकुलं ममतया व्यग्रम्। तथा सर्वेषां तनुभृतां तच्चित्तं चौरेष्वपीदृग्रसं पुत्रादिसमस्नेहं कथं न भवति। यतः, ते चौरादयोऽप्येवं भवितारो जायादिभावं यास्यन्ति। अत एवेमां विवेकहीनां चेष्टां धिक्॥

नित्यं हृत्कमलं कृतार्थयतु मे देवो भवानीपति-
र्यस्मिन्मार्गगते मतेर्विरमति द्रागेव माया यया।
हर्तुं बोधधनं निबध्य बहुधा पाशैः प्रमादादिभि-
र्मोहाब्धौ विषयैर्विलोभ्य विवशं व्याक्षिप्यते विष्टपम् ॥ ३७ ॥

भवानीपतिर्देवः शिवो नित्यं मम हृत्पद्मं कृतार्थयतु। यस्मिञ्शिवे मार्गमिते द्राक् शीघ्रं मतेर्माया विरमति निवर्तते। तिष्ठतु माया, तत्राह—यया मायया ज्ञानं धनं हर्तुं प्रमादादिभिः पाशैर्बहुधा बद्ध्वा विषयैः स्रगादिभिर्विलोभ्य विवशं बद्ध्वा भुवनं मोहसागरे क्षिप्यते॥

पूर्वो ह्रस्व इतश्च दीर्घ इतरो नैव क्वचिद्विद्यते
कस्यानेन समानता त्रिभुवने को वा समानोऽमुना।
अन्तःस्थायिनि घोषवत्यविरतं लोकोपचारात्मनः
संज्ञासंधिसमाप्तये प्रतिजनुः किं नात्र तत्स्थीयते ॥ ३८ ॥

इति श्रीपुरुषोत्तमकृतायां विष्णुभक्तिकल्पलतायां भक्तिगौरवदर्शनं नाम पञ्चमः स्तबकः।

हे मनः, प्रतिजनुर्जन्मनिजन्मनि संज्ञा देवदत्तादिका नरपश्वादिका वा तस्याः संधिः संबन्धस्तत्समाप्तये जन्मनिवृत्त्यै अत्र हरौ किं न स्थीयते। यस्मादितो हरेः पूर्वं आदिर्नास्ति, अनादित्वात्। इत इतरो ह्रस्वो रिपुरपि नास्ति, इतो दीर्घोऽपि क्वचिन्न विद्यते, त्रैलोक्येऽनेन हरिणा समानता सादृश्यं कस्या अमुना समानो वा कः, न कोऽपीत्यर्थः। किंभूतेऽत्र। अन्तःस्थायिनि चित्तस्थे। अन्तर्यामिणीत्यर्थः। लोकोपचाराल्लोकव्यवहारतोऽविरतं नित्यं घोषवति शब्दवति घोषो वेदशब्दः प्रतिपादकत्वेनास्तीति। वस्तुतो वाग्गोचरे। तदासक्तिः कथं न क्रियते इत्यर्थः॥

इति महीधरविरचिते विष्णुभक्तिकल्पलताविवरणे भक्तिगौरवदर्शनं पञ्चमः स्तबकः।

---

## षष्ठः स्तबकः।

ये संसारतमिस्रतीव्रतपना ये मुक्तिलक्ष्मीलस-
न्मुक्ताहारकणाः प्रणामनिपुणप्राणिप्रसादोन्मुखाः।

अद्वैतागमवाक्यदीपकदशानिर्माणसूत्राणि ये
ते गोविन्दगुणाः प्रमोदमतुलं कुर्वन्तु वः सर्वदा ॥ १ ॥

ते हरिगुणा वो युष्माकं अतुलं प्रमोदं हर्षं कुर्वन्तु। ते के। ये संसाररूपान्धकारस्य तीव्रसूर्यप्रायाः। संसारनिवर्तका इत्यर्थः। ये मुक्तिरूपा या लक्ष्मीस्तस्या लसन्तो मुक्ताहारस्य कणा मणयः। ये च नमस्कारकुशला ये प्राणिनस्तेषां प्रसादं प्रत्युन्मुखाः। प्रसादकरा इत्यर्थः। ये च। अद्वैतागमवाक्यानि वेदान्तशास्त्रवचांसि त एव दीपकास्तेषां दशानिर्माणाय वर्तिरचनाय सूत्रभूताः॥

कृष्ण त्वत्करुणाकटाक्षलहरीलीलालवाय स्पृहां
कुर्वन्तः कमलासनप्रभृतयो देवाः स्तवं तन्वते।
एकस्तत्तव पादपद्मरजसां गङ्गाम्बुना मिश्रितो
वातोद्धूतकणः कृतार्थयतु मां कोऽपि प्रणामानतम् ॥ २ ॥

हे कृष्ण, ब्रह्मादयो देवास्तव कृपाकटाक्षलहर्यां या लीला तस्या लेशायैकदेशप्राप्तये इच्छां कुर्वन्तः सन्तस्तव स्तवान्स्तोत्राणि कुर्वते। तत्तस्मात्तव चरणधूलीनामेको वातोद्धूतः कोऽपि कणो लेशो नत्या नम्रीभूतं मां कृतार्थयतु। किंभूतः। गङ्गोदकयुक्तः॥

त्वं राजा भुवनेष्वतो भुवि तवावात्सं कुटुम्बीभव-
न्दुष्पूरोदरपूरणाय वृषलः क्षेत्री खलेषु स्थितः।
निष्पन्नं भवतो निवेदितवतो मे कर्मबीजैरपि
क्षीणं तत्तव सेवनव्यसनिनं मामच्युताङ्गीकुरु ॥ ३ ॥

यतस्त्वं भुवनेषु राजा अतः कुटुम्बीभवन्नहं तव गृहे अवात्समुषितवानस्मि। वसतेर्लुङ्युत्तमैकवचने रूपम्। किमर्थम्। दुष्पूरस्य जठरस्य पूरणाय। कीदृशोऽहम्। वृषलः वृषं धर्मं लुनातीति धर्मविमुखः। क्षेत्री शरीरवान्। खलेषु पापेषु स्थितः। क्षेत्रे निष्पन्नमुपार्जितं शुभाशुभं भवतस्तव निवेदितवतो मम कर्मरूपबीजैः क्षीणं कृष्णार्पणबुद्ध्या कर्म कुर्वतः। कर्मक्षयादिति भावः। 'यत्करोषि—' इति गीतोक्तेः। तस्मात्तव सेवासक्तं मां हे अच्युत अङ्गीकुरु॥

न्यायोऽयं निरणायि नैकनिगमैर्नारायणानश्वरः
कर्तारं तदुपैति कर्म कलितं यद्येन यादृग्यथा।
त्वामेव स्मरतो ममेह विगतोऽनेहा महानप्यहो
मच्चिन्ता निमिषार्धमेकमपि किं तत्तन्यते न त्वया ॥ ४ ॥

हे नारायण, अनेकशास्त्रैरनश्वरो निश्चलोऽयं न्यायो निरणायि निर्णीतः। क इत्याह—येन प्राणिना यथा येन प्रकारेण यादृक् शुभमशुभं वा कर्म कलितं कृतं तत्कर्तारमुपैति।

मम तु त्वामेव स्मरतः सतो महाननेहा दीर्घकालो गतः । तत्तर्हि निमिषार्धमपि मच्चिन्ता त्वया किमिति न तन्यते । मच्चिन्ता विधेयेति भावः ॥

श्रीविष्णो जगदेकजीवन घनानन्दैकदीक्षागुरो
मूर्छन्मोहमहान्धकारतरणे कारुण्यरत्नाकर ।
ग्राहव्याहतचेष्टितद्विपविपद्विच्छेददक्ष प्रभो
कस्याग्रे भवसंभवः परिभवस्त्वामन्तरेणोच्यते ॥ ५ ॥

हे श्रिया युक्त विष्णो, हे जगतामेकजीवन, हे निबिडानन्दैकदीक्षायामानन्ददाने गुरो, हे मूर्छतां मूढानां मोह एव महान्धकारस्तस्य तरणे खे मोहनाशक, हे कारुण्यरत्नाकर दयाब्धे, ग्राहेण व्याहता चेष्टा यस्येदृशो द्विपो गजेन्द्रस्तस्य विपन्नाशे चतुर, हे प्रभो, संसारोत्थः पराभवस्त्वां विना कस्याग्रे कथ्यते ॥

सध्रीचीर्दुःखवीचीरतिशयविषमा विक्षिपन्व्याकुलत्वं
गच्छन्न च्छन्दतः स्वादधिभवजलधि त्वां मधुद्वेषणैषः ।
स्मर्तुं शक्नोमि वेला मयि तव तदियं देव दातुं दयार्द्र-
दृष्टेरंशं प्रभूणां त्रिजगति करुणादानपात्रं यदार्तः ॥ ६ ॥

हे मधुद्वेषण मधुसूदन । 'रिपौ वैरिसपत्नारिद्विषद्वेषणदुर्हृदः' इत्यमरः । एषोऽहं त्वां स्मर्तुं न शक्नोमि । किं कुर्वन् । अधिभवजलधि संसाराब्धौ अत्यन्तं विषमाः सध्रीचीः सहाञ्चनशीलाः सर्वत्र प्रसारिणीर्दुःखलहरीर्विक्षिपन्प्रेरयन् । अत एव स्वात् निजात् छन्दतोऽभिप्रायात् स्वाभिप्रायेण स्ववशेनैव वा व्याकुलत्वं गच्छन् । 'छन्दो वशेऽभिप्राये च' इति कोषः । तत्तस्मात् हे देव, तव दयार्द्रदृष्टेरंशं मयि दातुमियं वेला एष समयः । 'कालसमयवेलासु तुमुन्' । यद्यस्मादार्तो दुःखितः । त्रैलोक्ये प्रभूणां दयादानस्य पात्रम् । प्रभुभिर्दीनेषु दया कार्येति भावः ॥

देव श्रीवासुदेव ध्रुवमवति तवोदारलीलाकला य-
द्विश्वं शश्वन्निकारोद्यतदनुतनुजव्याकुलीभूतमेतत् ।
तत्रैकान्तेऽनुकम्पानिगमनिगदिता न्यायदृष्ट्या निदानं
तत्त्वं विश्वोपकारव्रत वितर मयि प्राप्तदौःस्थ्ये दृगंशम् ॥ ७ ॥

हे श्रीवासुदेव, देव दीप्यमान, तवोदारा महती या लीला तत्कला लेशोऽप्येतद्विश्वं ध्रुवमवति रक्षति । कीदृशम् । शश्वन्निकारे पराभवे उद्यता ये दनुतनुजा दानवास्तैर्व्याकुलीभूतम् । तत्र तासु लीलासु एकान्ते अनुकम्पा निगमैर्वेदैः कथिता । या न्यायदृष्टिस्तत्त्वज्ञानं तस्य निदानं कारणम् । तत्तस्माद्धे विश्वोपकारव्रत सर्वेषामुपकार एव व्रतं यस्य तादृश, प्राप्तदौःस्थ्ये दुःखिते मयि दृगंशं कृपाकटाक्षं वितर देहि ॥

एतन्मेऽव मुकुन्द देव हृदयं व्याप्तं विपद्वारिधे-
र्वीचीभिर्विरलेतराभिरभितो रम्भेव दीव्यद्दलैः।
विज्ञप्तिर्वरदायिनी[1] त्वयि कृतापि स्यान्न चेत्प्राणिनां
शब्दब्रह्मणि तच्छ्रमो मतिमतामाकाशकण्डूयनम् ॥ ८ ॥

हे मुकुन्द देव, एतन्मे हृदयमव रक्ष। कीदृशम्। विपद्वारिधेर्दुःखाब्धेर्विरलेतराभिर्घना-भिर्वीचीभिर्व्याप्तमत्यन्तदुःखितम्। तत्र दृष्टान्तः—दीव्यद्भिर्दलैः पत्त्रैर्यथा रम्भा कदली व्याप्ता। हे नाथ, त्वयि कृतापि विज्ञप्तिर्यदि प्राणिनां वरदायिनी इष्टदात्री न चेत् तर्हि मतिमतां सुबुद्धीनां शब्दब्रह्मणि वेदे श्रमो नभःकण्डूयनतुल्यः। हरिसेवयैष्टप्राप्तिरिति वेदार्थः। स चेन्मिथ्या तर्हि वेदोक्तकर्मणि श्रमो नभःखर्जनवन्मिथ्येत्यर्थः॥

यन्मे पातकमस्ति माधव तव ध्यानान्तरायीभव-
त्तत्किं देव निवार्यते न भवता भक्तानुकम्पावता।
दासे दुःसहवेदनां गतवति स्वामी समर्थोऽपि चे-
दौदासीन्यमुरीकरोति तदहो स्वस्वामिधर्मः कुतः ॥ ९ ॥

हे माधव, तव ध्यानेऽन्तरायीभवद्विघ्नभूतं पातकं यन्मेऽस्ति। हे देव, भक्तेषु कृपा-लुना त्वया तत्पातकं किं न निवार्यते। अर्थान्तरेण द्रढयति—दुःसहपीडायुक्ते दासे सति दुःखनिरसनसमर्थोऽपि स्वामी चेदुदासीनतामुपेक्षां कुरुते, तर्हि स्वामिसेवकधर्मः कुतः। न कुतोऽपीत्यर्थः॥

यस्मिन्न स्मृतिमेषि मेऽखिलगुरो गोविन्द तस्मिन्क्षणे
मा जीवन्निति नीतिनिर्मलमतिर्मापैतु मच्चेतसः।
जन्तुर्यत्तव सेवया विरहितो जीवत्यवश्यं न त-
त्सारं सौरभसंपदामविषयो यद्वत्स्मितं कौसुमम् ॥ १० ॥

हे सर्वगुरो, हे गोविन्द, यस्मिन्क्षणे त्वं स्मृतिं नैषि चित्तं नायासि तस्मिन्कालेऽयं जनो मा जीवन्नश्यतु। 'माङ्याक्रोशे' इति शतृप्रत्ययः। इत्येतादृशी नीत्या निर्मला मति-र्मच्चित्तान्मा गच्छतु। यस्माज्जन्तुस्तव सेवां विना यज्जीवति अवश्यं न तत्सारम्। तत्र दृष्टान्तः—यथा कौसुमं स्मितं पुष्पविकासः सौरभसंपदां गन्धसमृद्धीनामविषयो न सा-रम्। अगन्धं पुष्पं निषिद्धमित्यर्थः॥

तावन्मे मन्तुमत्त्वं मधुमथन महद्यामि यावन्न यत्ना-
द्योगाभ्यासप्रवीणैरपि कपिलमनुव्यासपूर्वैः स्मृतं ते।

---

1. 'दायिनि' ख..

पादाम्भोजं शरण्यावधि शरणमधिष्ठानमेकं शुभानां
पश्चान्मे कैव चिन्ता तव भुवनविभो रक्षणीयस्य धर्मात् ॥ ११ ॥

हे मधुमथन, तावन्मम महन्मन्तुमत्त्वं सापराधता यावद्यत्नाद्योगाभ्यासकुशलैः कपिलादिभिः स्मृतं तव पादाम्बुजं शरण्यानामवधिभूतं शुभानां कल्याणानामेकं स्थानं शरणं न यामि । पश्चान्मम कैव चिन्ता, न कापीत्यर्थः । कीदृशस्य मे । हे भुवनविभो, त्वया धर्माद्रक्षणीयस्य त्वच्छरणागतस्य । मे [मम] त्वयैव रक्षा कार्येति भावः ॥

गोभिः शोभि तवानुवादनिबिडानन्दाभिरुद्यद्वृषं
रामोदारचरित्रचारु दलितारिष्टं प्रभूतद्युति ।
त्यक्तत्रासमघादपि प्रबलतस्त्वत्पादपद्माश्रयं
त्याज्यं गोकुलवद्गदाग्रज कदाप्येतन्नमे तन्मनः ॥ १२ ॥

हे गदाग्रज, मम मनो गोकुलवत्कदापि त्वया न त्याज्यम् । कीदृशं गोकुलं मनश्च । तवानुवादेन निबिड आनन्दो यासां तादृशीभिर्गोभिर्धेनुभिरिन्द्रियैश्च शोभि राजितम् । उद्यन् वृषोऽसुरो धर्मश्च यत्र । रामस्योदारचरितेन चारु, रामाणां स्त्रीणां चरित्रेण चारु । दलितोऽरिष्टो वृषभासुरो विघ्नश्च यस्मात् । प्रकृष्टकान्तीति समानम् । प्रबलादघासुरात्पापाच्च त्यक्तत्रासं निर्भयम् । 'दुःखैनोव्यसनेष्वघम्' इत्यमरः । तव चरणपद्ममाश्रयो यस्येति समानम् ॥

संप्राप्तं भुवनत्रयेऽपि सुयशः सोमावदानं मया
लब्ध्वानेकसुखानुभूतिसुभगा सुत्रामलक्ष्मीरपि ।
मन्ये तीर्णमशेषदुःखविषमं संसारवारांनिधिं
यद्यायाति दशास्यशात्रव तव ध्यानामृतं मे हृदि ॥ १३ ॥

हे दशास्यशात्रव रावणारे, तव ध्यानलक्षणममृतं यदि मम चित्ते आयाति, तदा मया त्रैलोक्ये चन्द्रनिर्मलं यशः प्राप्तं नानासुखानुभवेन सुभगेन्द्रलक्ष्मीरपि प्राप्ता । 'सुत्रामा गोत्रभिद्वज्री' इत्यमरः । नानादुःखैर्विषमं संसारसमुद्रं तीर्णं मन्ये ॥

चेतो मे चरितार्थयाच्युत चिरं त्वद्ध्यानबुद्ध्यान्वितं
रूपेण प्रकटीभवन्नवभिदाभक्तिप्रतीतात्मनाम् ।
येन त्वं बहुलाकुलं[1] बहुलया वृष्ट्याकुलं[2] गोकुले
रक्षिष्यन्विभरांबभूविथ गिरिं गोवर्धनं लीलया ॥ १४ ॥

---

१. 'बहुगोकलं' क. २. 'कुलव्याकुलम्' क; 'कुलं गोकुलम्' ख.

हे अच्युत, तव ध्यानेन या बुद्धिस्तद्युक्तं मे चित्तं चरितार्थय कृतार्थं कुरु । कीदृशस्त्वम् । नव भिदा भेदाः श्रवणकीर्तनादयो यस्याः सा नवभिदा सा चासौ भक्तिश्च । भक्तिशब्दस्य प्रियादित्वाद्भिदाशब्दस्य पुंवद्भावाभावः । तया प्रतीतस्तुष्ट आत्मा चित्तं येषां तेषां प्रकटीभवन् । येन हेतुना त्वं किलेति प्रसिद्धौ । [गोकुले] बहुलया घनया वृष्ट्या व्याकुलं बहुलाकुलं गोकुलं रक्षिष्यन् रक्षितुम् । तुमर्थे लृट् । गोवर्धनं गिरिं लीलया बिभरांबभूविथ धृतवानसि । 'बहुलः कृष्णपक्षेऽग्नौ शितौ च बहुला गवि' ॥

कारुण्यामृतपूरिताक्षियुगलव्यालोलनैकद्युति-
स्पर्शोद्देशदलद्दुरन्तदुरितं दामोदरैनं तव ।
तावत्पाहि कृपाहितैकनिलय त्वत्पादपद्मस्मृते-
रन्तर्यामिणि यामि निर्मलतया त्वय्येव यावल्लयम् ॥ १५ ॥

हे कृपाहितैकनिलय दयाहितयोरेकाश्रयभूत, हे दामोदर, तवाङ्घ्रिस्मरणान्निर्मलत्वेनान्तर्यामिणि त्वयि यावदहं लयं यामि लीनो भवामि तावदेनं मां त्वं पाहि रक्ष । कीदृशं माम् । तव कारुण्यामृतेन पूरितं यन्नेत्रयुग्मं तस्य व्यालोलाः प्रसरन्त्यो या नैकद्युतयो विविधकान्तयस्तासां स्पर्शोद्देशेन स्पर्शलेशेनैव दलद्दुरन्तं दुःसहं दुरितं पापं यस्य तम् ॥

ये लक्ष्मीपतिपादपङ्कजमिलन्मन्दाकिनीमज्जनो-
द्दामानन्दभरेण भान्ति भविनां ते वासराः सार्थकाः ।
सद्यःपण्डकखण्डिताधरवधूवैक्लव्यवद्ब्रह्मवि-
त्कर्मन्दिक्रियमाणकर्मवदहो शेषं जनुर्नार्थवत् ॥ १६ ॥

हरिपादपद्मे मिलन्ती या गङ्गा तत्र मज्जनेन हरिपादस्मरणेनोद्दामो बहुलो य आनन्दभरः सुखौघस्तेनोपलक्षिता दिवसा ये प्राणिनां यान्ति ते सार्थकाः । शेषं हरिपदस्मृतिहीनं जन्म नार्थवन्निरर्थकम् । तत्र दृष्टान्तः—सद्यः पण्डकेन नपुंसकेन खण्डित ओष्ठो यस्या ईदृश्या वध्वा वैक्लव्यं दुःखं तद्वत् । तद्यथा निरर्थकम् । किं च ब्रह्मविदा कर्मन्दिना तापसेन क्रियमाणं यत्कर्म तद्वत् । 'कर्मन्दी तापसो यतिः' । 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ–' (४।१।१३) इति व्याससूत्रात् ॥

श्रीमच्चूतकुणेऽतिसौरभचणे कीरः कुलस्त्री धव-
ध्याने मञ्जुसरोजराजिषु यथा पुष्पंधयश्रेणयः ।
वातान्दोलितवारिवाहविगलद्वारीव सारङ्गव-
ल्लक्ष्मीलालनलोल लालसमिदं त्वत्सेवने मेऽस्तु हृत् ॥ १७ ॥

हे रमालालनलोल लक्ष्मीविलासने सतृष्ण । 'लोलश्चलसतृष्णयोः' इत्यमरः । इदं मम हृदयं तव सेवने लालसं साभिलापमस्तु । तत्र दृष्टान्तचतुष्टयमाह—अतिसौरभेन वित्ते

विख्याते श्रीमति चूतकुणे पकाम्रे कीरः शुको यथा साभिलाषः स्यात्। 'तेन वित्तश्चुञ्चुप्चणपौ' इति सौरभशब्दाच्चणप्प्रत्ययः। पक्वश्चूतश्चूतकुणः। 'तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणज्जाहचौ' इति कुणप्प्रत्ययः। यथा भर्तुर्ध्याने कुलनारी लोला। यथा च मनोहरपद्मश्रेणीषु भ्रमरपङ्क्तयः। यथा वातेन कम्पितो यो मेघस्तस्माद्विगलति वारि जले सारङ्गश्चातक इव। एतेषां तेष्विव मे त्वयि प्रेमास्त्विति भावः॥

साक्षाद्यस्य मनोमयी तव भवेदर्चा स संत्यज्यते
संसाराभिधया भयंकररुजा तैस्तैः सपर्यामृतैः।
स्नातं सर्वसुखावहैर्मुनिवराः कल्याणगीर्भिः सुराः
कल्पद्रुप्रसवैः प्रभूतमहसं संपूजयन्ति प्रभो॥ १८॥

हे प्रभो, यस्य पुंसः साक्षान्मनोमयी भवदर्चा भवेत् मानसी तव पूजा प्रतिमाध्यानं वा भवेत् स पुमान् संसाररोगेण भयंकरेण त्यज्यते। सुखावहैः पूजामृतैः स्नातं तं मुनिवराः शुभवाणीभिः 'चिरं जीव' इत्यादिभिरर्चन्ति। सुराः कल्पवृक्षपुष्पैश्च। कीदृशं तम्। प्रभूतमहसं बहुलतेजसम्॥

सेवा ते वासुदेवानिशमशनिरसौ प्रौढपापाचलानां
चिन्तारत्नं च साक्षाज्जगति जनमनःकामनापूरणाय।
स्फूर्जद्दुःखौघवीचीविषमतमभवाम्भोधिपारावनीयं
तद्ब्रह्माद्वैततेजोऽमृतमयमनयैवाप्ययोगादवाप्यम्॥ १९॥

हे वासुदेव, तव सततं सेवा प्रौढा ये पापपर्वतास्तेषामशनिः। वज्रप्राया नाशिकेत्यर्थः। जनमनसामिच्छापूरणाय सचिन्तामणितुल्या इष्टप्रदा। स्फूर्जन्त्यो या दुःखोर्मयस्तैर्विषमतमो यः संसाराब्धिस्तस्य पारावनी परपारतीरभूमिः। संसारतारिकेत्यर्थः। तत्तस्मादयोगादपि योगाभ्यासं विनापि अमृतमयं ब्रह्माद्वैतं तेज आत्मसाक्षात्काररूपं मयानया सेवयैवावाप्य प्राप्यम्॥

विष्णो कामितकामितानि ददते लोकत्रये देवता
सा चेदस्ति तदातदर्पितहृतौ कालः किमालस्यकृत्।
त्वद्भक्त्या फलितं तु कालकलितं न क्षीयते जन्मिना-
मिष्टं माति मनोरथस्य महिमोद्रेकान्न मार्गेऽपि च॥ २०॥

हे विष्णो, त्रैलोक्ये का देवता अमितकामितानि बहूनीष्टानि ददते। 'दद दाने'। सा चेदिष्टदात्री देवतास्ति तदा तद्दत्तापहारे कालः किमालस्यं करोति। न करोतीत्यर्थः। त्वद्भक्त्या प्राप्तं तु कालग्रस्तं न नश्यति। किं च भक्तिफलं च प्राणिनां मनोरथमार्गेऽपि महिमाधिक्यान्न माति। मनोरथाधिकं सेवाफलमिति भावः॥

लक्ष्मीकान्त कृतान्तपत्तनमनभ्यर्णं किमु प्राणिनां
यावज्जीवमपि प्रपीडितहृदस्तिष्ठन्ति लोभादिभिः ।
तन्नस्त्वच्चरणारविन्दशरणादन्यां मनःकामनां
मा निर्मातु कदाचिदेव करुणाकल्लोलिनीकामुक ॥ २१ ॥

हे रमापते, हे करुणाकल्लोलिनीकामुक, कल्लोला ऊर्मयो यासु ताः कल्लोलिन्यो नद्य-स्तासां कामुको भर्ता समुद्रः हे दयासमुद्र, तत्तस्मान्नोऽस्माकं मनः कदाचिदपि त्वत्पा-दपद्मशरणादन्यामिच्छां मा करोतु । यतः प्राणिनां कृतान्तपत्तनं यमनगरं किमु अनभ्यर्णं दूरम् । अपि तु निकटमेव । तथापि लोभादिभिर्यावज्जीवं पीडितचित्ता जनास्तिष्ठन्ति ॥

विश्वक्सेन किमेनमेनसि कृताशंसं नृशंसं जनं
कृत्वा कालमुखे क्षिपस्युपदिशन्कर्मानुरूपां मयि ।
बुद्धिं विष्टपकष्टभञ्जन जनुर्जीवातुरेको नृणां
कारुण्यामृतवारिधिस्त्वमुचितं किं तत्तवापीदृशम् ॥ २२ ॥

हे विष्वक्सेन व्यापकसैन्य, हे विष्टपकष्टभञ्जन लोकदुःखनिवर्तक, जनुषि जन्मनि जीवातुर्जीवनौषधभूतो दयामृतसमुद्रस्त्वं कर्मानुरूपामपि बुद्धिमुपदिशन्नेनसि कृताशंसं पापे कृताभिलाषं अत एव नृशंसं क्रूरमेनं जनं कृत्वा कालवदने किं क्षिपसि तवापि ईदृशं प्राणिनां नरकपातादिदुःखदानं किमुचितम् । अनुचितमित्यर्थः ॥

भेदाभावतया भवेदिह भवद्भक्तिर्न विष्णो मया
मायासंतमसावसानकलितब्रह्मप्रकाशश्रिया ।
भेदस्तु भ्रममातनोति परमं तत्त्वं किमित्याशया
तत्ते भक्तिसुधातरङ्गततये चेतः करोति स्पृहाम् ॥ २३ ॥

मायैव संतमसं गाढान्धकारं तस्यावसाने नाशे कलिता प्राप्ता ब्रह्मप्रकाशश्रीः परमान-न्दसाक्षात्कारो येनेदृशेन मया भेदाभावत्वेन हे विष्णो, तव भक्तिर्न भवेत् । भेदस्तु परमं तत्त्वं किमिति चित्ते भ्रमं विस्तारयति । तत्तस्मात्ते तव भक्तिलक्षणामृतोर्मिपङ्क्त्यै चि-त्तमिच्छां करोति ॥

दत्त्वा चन्दनमात्रमत्रभवते भावान्विता भामिनी
भूत्वा भाग्यवती व्यतीत्य विबुधानुच्चैरगात्कुब्जिका ।
मालाकारमनस्तुतोष न कया पुष्पप्रदानाच्छ्रिया
भक्तिः स्वल्पतरापि ते वितनुते कामं न कं श्रीपते ॥ २४ ॥

अत्रभवते पूज्याय तुभ्यं कुब्जा भामिनी भावान्विता श्रद्धायुक्ता सती चन्दनमात्रं

दत्त्वा भाग्यवती भूत्वा देवानतिक्रम्योच्चैर्हरिलोकं ययौ । पुष्पप्रदानादेव मालाकारमनोऽपि कया समृद्ध्या न तुतोष । अपि तु सर्वसमृद्ध्या तुष्टमभूत् । हे श्रीपते, स्वल्पतरापि ते भक्तिः कं कामं न तनुते । सर्वेष्टमपि प्रयच्छतीत्यर्थः ॥

दत्तं पूतनया दयार्णव तव द्वेषं दधत्या विषं
निःशेषं तदपि व्युदस्य सदसद्याता परं त्वत्पदम् ।
तस्यानौपयिकं मुकुन्द तव किं देयं यदङ्घ्रिस्थिता
त्रिस्रोतास्तरसा रसादपि कृतं कर्म क्षिणोति क्षणम् ॥ २५ ॥

हे दयासमुद्र, द्वेषं धारयन्त्या पूतनया तव विषं दत्तं तदपि सर्वे सदसच्छुभाशुभं व्युदस्य त्यक्त्वा त्वत्पदं ब्रह्मपदं प्राप्ता । हे मुकुन्द, तस्य तव किं देयं दातव्यम् । अनौपयिकमनुपयोगि सर्वं देयम् । तवोपयोगीत्यर्थः । यत्पादस्थिता गङ्गा स्नेहादपि कृतं कर्म तरसा बलेन क्षणात्तत्क्षणं क्षिणोति नाशयति ॥

केशी केशव लेशमप्युपकृतेः कस्यापि नैव व्यधा-
द्वेधा निष्ठुरकर्मकर्मठतमं चक्रे यमन्धं मदात् ।
यत्त्वं तं विरजीचकर्थ हृदयग्रन्थिं मृदित्वात्मनो
हस्तेनान्तरगेन तस्य वपुषः स्वान्तं दयार्द्रं तव ॥ २६ ॥

हे केशव, केशी दैत्यः कस्याप्युपकारस्य लेशमपि नैवाकृत । ब्रह्मा मदान्धं यं निष्ठुरकर्मसु अतिकर्मठं प्रवीणतमं चक्रे । कर्मणे घटते, 'कर्मणि घटोऽठच्' । आत्मनः स्वस्य हस्तेन तत्तच्छरीरान्तर्गतेन हृदयग्रन्थिमहंकारमज्ञानं मृदित्वा विनाश्य यस्मात्त्वं केशिनं विरजीचकर्थ रजोहीनं कृतवान् । तस्मात्तव स्वान्तं चित्तं दयार्द्रम् । पापिनोऽप्युपकारादिति भावः ॥

दृष्ट्वा कालियनागदूषितपयःपानेन पन्नं यमी-
तीरे तर्णकपालबालककुलं कस्योपकारस्त्वया ।
क्लृप्तो नेह दयार्द्रयाच्युत धिया यद्वैनतेयादभू-
द्भोगी भग्नभयो धुनी गततरा रम्याश्च दम्यादयः ॥ २७ ॥

हे अच्युत, तर्णका वत्साः पाला बालका गोपकुमारास्तत्समूहं कालियनागेन दूषितं विषप्रायं कृतं यत्पयो जलं तत्पानेन यमुनातीरे पन्नं मृतं दृष्ट्वा करुणार्द्रया दृष्ट्या त्वया कस्योपकारो न कृतः । सर्वस्यापि कृत इत्यर्थः । तमेवाह—यस्माद्भोगी कालियो गरुडाद्भीतिरहितोऽभूत् । धुनी यमुना गतगरा निर्विषा अभूत् । दम्यादयो वत्सा बालाश्च रम्याः सजीवा अभूवन् । इति विपरिणामः ॥

पन्थानं प्रथमं पिधाय वपुषा पीतेन वक्त्रं पुन-
र्व्यादायाजगरः परश्शतपशूनर्भैः समं जग्रसे ।
त्वं तस्यापि तदात्तजीवनविधिव्याजेन विष्णो व्यधाः
सद्यः संसृतिपाशनाशनमतस्त्वामीशमाशास्महे ॥ २८ ॥

अजगरोऽघासुरः स्थूलेन वपुषा प्रथमं मार्गमाच्छाद्य पुनर्मुखं व्यादाय विशालं कृत्वा अर्भैर्बालैः सह परश्शतान्शताधिकान्पशूञ्जग्रसे । तेनात्ता भक्षिता गोपादयस्तेषां जीवनविधिमिषेण तस्याप्यघासुरस्य सद्यः संसारपाशनाशं हे विष्णो, त्वं कृतवान् । अतो हेतोरीशं संसारपाशनाशनक्षमं त्वां वयमाशास्महे वाञ्छामः ॥

देव श्रीवर पीवरः कवलयंस्तत्त्वार्थबुद्ध्यङ्कुरा-
हृत्कासारदयापथः कलुषयन्मोहो महाकासरः ।
अन्तर्यामिणि साभ्यसूयहृदयं धत्ते भवत्यप्ययं
तत्किं तेन महाहवः सुमनसां संतुष्टये नेष्यते ॥ २९ ॥

हे देव, हे श्रीपते, पीवरः स्थूलो मोह एव महाकासरो महामहिषः । 'कासरो महिषः स्मृतः' । अन्तर्यामिणि भवति त्वय्यपि असूयामहितं चित्तं धत्ते । किं कुर्वन् । तत्त्वार्थबुद्ध्यङ्कुरान् तत्त्वज्ञानलेशान् कवलयन्ग्रसमानः । तथा हृदयमेव कासारः सरस्तस्य दयारूपं जलं कलुषं कुर्वन् । 'कासारः सरसी सरः' । तत्तस्मात्तेन मोहेन महद्युद्धं सुमनसां साधूनां संतोषाय किं नेष्यते ॥

विश्वाधार हरेऽहरेकमपि मे हृद्वृत्तिरप्युद्धस-
त्त्वद्ध्यानोद्धुरदुग्धसिन्धुलहरीलीलामरालीयताम् ।
येनाह्नाय समस्तजन्म सफलं संजायतेऽह्ना यथा
वर्णेनादिभवेन देव सफला वैयञ्जनीयं जनिः ॥ ३० ॥

हे विश्वसाधार, हे हरे, मम चित्तवृत्तिरेकदिनमपि उत्फुल्लं विकसच्छ्रेष्ठं यत्तव ध्यानं स एवोद्धुरो महान्दुग्धसागरस्तस्य लहरीषु लीलाहंसवदाचरतु । येन हरिध्यानाब्धिहंसत्वेन अह्ना एकदिनेन सकलजन्म सफलं जायते । तत्र दृष्टान्तः—यथादिभवेन वर्णेनाकारेण सर्वा व्यञ्जनामियं वैयञ्जनी जनिः कादिव्यञ्जनसृष्टिः सफला जायते तेन विनोच्चारयितुमशक्तेः ॥

श्रीदामोदर सीदतामपि सतां त्वत्तः परं याचितुं
चेतो नेच्छति वेदगोरसलसद्धैयंगवीनात्मनः ।
कः कल्पद्रुममूलनिर्मलमणीनिष्पन्नवेदीतलं
हित्वा काङ्क्षति तीरभूरुहभवच्छायामपायास्पदम् ॥ ३१ ॥

हे श्रीदामोदर, सीदतां दुःखितानामपि सतां चेतस्त्वत्तोऽन्यं याचितुं नेच्छति । कीदृशात्त्वत्तः । वेद एव गोरसो दधि तस्य लसद्धैयंगवीनं नवनीतमुपनिषद्वेदानां सारत्वात् स एवात्मा स्वरूपं यस्य । उपनिषत्प्रतिपाद्यस्येत्यर्थः । तत्र दृष्टान्तमाह—कल्पवृक्षमूले निर्मलरत्नैर्निर्मितं यद्वेदीतलं तत्यक्त्वापायानां विघ्नानामास्पदभूतां नदीतीरवृक्षच्छायां को वाञ्छति ॥

देव श्रीवत्सलक्ष्मन्नव कवलयतः कालहस्ताद्विहस्ता-
　नेतानेकोऽपि लोको निधिरधिकतरश्रीरनुक्रोशवाराम् ।
या दैन्यं दुःखभाजां शमयति न दया किं तया साध्यमन्य-
　त्तन्नः किं न प्रपन्नानपि विनयवृतो वीक्षसेऽपि क्षणार्धम् ॥३२॥

हे देव, हे श्रीवत्सलाञ्छन, कवलयतो ग्रासं कुर्वतः कालहस्ताद्यमकराद्व्याकुलानेतानस्मांस्त्वमव रक्ष । यतोऽधिकशोभायुक्तोऽनुक्रोशवारां दयोदकानां निधिर्लोके त्वमसि । अर्थान्तरमाह—या दया दुःखिनां दीनत्वं न नाशयति तया दययान्यत्किं साध्यमस्ति । तत्तस्मात्प्रपन्नाञ्शरणागतान्विनययुक्तान्नोऽस्मान्क्षणार्धमपि किं न पश्यसि ॥

लक्ष्मीजाने न जाने प्रतिजनिजनितानल्पसंकल्पसूत्रै-
　रारब्धे मोहजाले नवनिबिडरुचिग्रन्थिगुप्तात्मकत्वात् ।
ध्यानं धर्मेषु धुर्यं धुतदुरितमथो पादयोरर्चनं ते
　चारित्रं चातिचित्रं कलयितुमपि तद्रक्ष कारुण्यवत्त्वात् ॥३३॥

हे लक्ष्मीपते, धर्मेषु धुर्यं मुख्यं धुतदुरितं निवर्तितपापं ध्यानं तव पादयोः पूजनम्, अतिचित्रं चारित्रं च कलयितुं मनसि धर्तुं न जाने न वेद्मि दयावत्त्वात्ततो रक्ष । ध्यानाद्यज्ञाने हेतुमाह—प्रतिजन्म नानावतारेषु जनिता ये अनल्पा बहुलाः संकल्पास्त एव सूत्राणि तैः कृते मोहजाले संसारे नवा प्रत्यहं नूतना या निबिडा घना रुचिः प्रीतिः सैव ग्रन्थिस्तत्र गुप्तोऽनुस्यूत आत्मा चित्तं यस्य तस्य भावस्तत्त्वं तस्मात् संसारासक्तत्वाद्ध्यानाद्यज्ञानमिति भावः ॥

मायामेया ममेयं तव नयनतिरोधानभूतास्ति विष्णो
　न त्वां पश्यामि तस्मादपि हृदयसरोजन्मरोलम्बमेकम् ।
संसारव्याधिवैद्यो यदसि तु तदियत्प्रार्थये स्वात्मदाना-
　द्वीक्षे त्वत्पादमात्रं कुरु किमपि तथा सिद्धभैषज्यदानात् ॥३४॥

हे विष्णो, अमेया अपरिमिता 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' इति वचनात् । इयं तव माया मम नेत्राच्छादनरूपास्ति । तस्माद्धृत्कमले भ्रमरभूतमपि त्वां न पश्यामि । 'उभावानन्दरोलम्बौ भ्रमरे परिकीर्तितौ' इति कोशः । यद्यस्मात्त्वं संसाररूपरोगस्य

वैद्योऽसि तत्तस्मादात्मदानादात्मसमर्पणेनेयदेतावद्याचे सिद्धौषधदानात्तथा किमपि कुरु यथा तव चरणमात्रमपि पश्यामि ॥

देव श्रीरामचन्द्र द्रुतममृतवतः कुर्वतः कायभाजो
व्याजव्याहारतोऽपि व्यसनशतहतस्वीयमार्गानुरोधात् ।
त्वन्नाम्नः शक्यते कैस्त्रिजगति महिमा वक्तुमप्युक्ततत्त्वै-
स्तन्नाम त्वत्प्रसादान्मम रसनकृतावासमभ्यासतः स्तात् ॥ ३५ ॥

हे देव श्रीरामभद्र, त्रैलोक्ये त्वन्नाम्नो महिमा उक्ततत्त्वैस्तत्त्वज्ञैरपि कैर्वक्तुं शक्यते । न कैरपीत्यर्थः । कीदृशस्य त्वन्नाम्नः । व्यसनशतेन परदाराशक्त्यादिना हतो नष्टः स्वीय-मार्गस्य स्वाचारानुष्ठानस्यानुरोधोऽनुवृत्तिर्येषां तानाचारबहिर्मुखानपि कायभाजः प्राणिनो व्याजव्याहारतः सांकेत्यादिमिषेणोच्चारणादप्यमृतवतो मोक्षभाजः कुर्वतः । तस्मात्त्वत्प्र-सादात्तव नामाभ्यासवशान्मम जिह्वायां कृतवासं स्तात् । भवतु । अस्तेस्तातङ्ङादेशे रू-पम् । 'सांकेत्यं पारिहास्यं वा स्तोभं हेलनमेव वा । वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥' इति शुकोक्तेः ॥

गुणग्रामं वक्तुं तव न वयमुद्दाममतयो
दयोदन्वन्नस्मास्वपि तदपि कोणं दिश दृशः ।
यतो लब्धे बोधे तव चरितपीयूषजलधौ
मरालानां स्यामाच्युत कतरसंज्ञाभृत इमे ॥ ३६ ॥

हे दयोदन्वन् दयासमुद्र, वयं तव गुणौघं वक्तुं नोद्यतबुद्धयः, तथाप्यस्मासु नेत्रस्य कोणं कटाक्षं दिश देहि । यतो दृग्दानाज्ज्ञाने प्राप्ते सति हे अच्युत तव चरित्रामृताब्धौ ये मराला हंसभूता ज्ञानिनस्तन्मध्ये कतरसंज्ञाभृतः किंचिन्नामधारका इमे वयं स्याम त्व-द्दासमध्ये गण्यामहे । शिखरिणी वृत्तम् ॥

श्रीरामस्य नमस्यमस्यदशुभान्यङ्घ्रिद्वयं तद्वयं
चित्तं चित्तमपेतपातकभरा भूरादिलोके कदा ।
द्रक्ष्यामोऽखिलमेव जन्तुमतुलश्रीकं तुलस्युत्तर-
स्रग्भाजं गरुडध्वजं परिलसत्पीताम्बरं शार्ङ्गिणम् ॥ ३७ ॥

अशुभानि पापान्यस्यन्निराकुर्वत् नमस्यं नमनीयं श्रीरामस्य पादद्वयं चेतं चेतं वि-चिन्त्य विचिन्त्यापेतपातकभरा निष्पापाः सन्तस्त्रैलोक्ये सर्वजन्तुमीदृशं वयं कदा द्रक्ष्यामः । कीदृशम् । सर्वश्रीयुक्तं तुलस्या अधिकमालायुक्तं गरुडकेतुं शोभमानपीतवस्त्रं शार्ङ्गधनु-र्धारिणम् । त्वत्पादस्मरणेन त्वत्स्वरूपं विश्वं कदा द्रक्ष्याम इत्यर्थः ॥

देव श्रीनरसिंह संहर मदज्ञानं यदाघ्रातह-
न्नालस्यं तरसा त्यजामि शिरसा नन्तुं त्वदङ्घ्रिद्वयम्।
लग्नं यत्र मनो मनोहरतरास्ताराधिपास्याः स्त्रियो-
ऽपास्य स्वर्गसहामुदारमयते मायाविहीनं महः॥ ३८॥

हे देव श्रीनृहरे, ममाज्ञानं संहर नाशय। येनाज्ञानेनाघ्रातं ग्रस्तं हृयस्याज्ञानग्रस्तोऽहं शिरसा तव पादद्वयं नमस्कर्तुमालस्यं तरसा बलेनापि न त्यजामि। यत्र पदद्वये लग्नं मनो मायातीतमुदारं महो ब्रह्मस्वरूपमयते प्राप्नोति। किं कृत्वा। अतिसुन्दरीश्चन्द्रमुखीर्देवानां स्त्रियोऽप्सरसोऽपास्य त्यक्त्वा॥

यत्कारुण्यकटाक्षलेशवशतो लब्धा दिवः स्वामिता
यस्याज्ञामपहन्तुमन्तकशिरश्छेत्तापि नालं मृडः।
संपत्तिक्षमया सदैव रमया यद्दास्यमभ्यस्यते
भक्ते सीदति यः प्रसीदति विभुः सेव्यः स एवाच्युतः॥३९॥

इति श्रीपुरुषोत्तमकृतायां विष्णुभक्तिकल्पलतायां विष्णुविज्ञप्तिर्नाम षष्ठः स्तबकः।

स एवाच्युतः सेव्यो नान्यः। यत्कृपाकटाक्षलेशवशाद्दिवः स्वामिता स्वर्गैश्वर्यमिन्द्रत्वं लभ्यम्। यमशिरसश्छेत्ता मृडः शिवोऽपि यस्याज्ञा हातुं न समर्थः। संपत्तिदात्र्या लक्ष्म्या यद्दास्यमेवाभ्यस्यते। भक्ते सीदति यो हरिः प्रसन्नो भवति। एतादृशो हरिः सेव्यो नान्यः॥

इति श्रीमहीधरविरचिते विष्णुभक्तिकल्पलताविवरणे विष्णुविज्ञप्तिर्नाम षष्ठः स्तबकः।

---

## सप्तमः स्तबकः।

संसारं तिरस्कर्तुं मङ्गलं करोति—

केयं कौस्तुभकान्तिपूरलहरीलीलाविहारातुला-
नन्दा नन्दति नन्दनन्दन घनश्यामे त्वदीयोरसि।
हृद्येवासि ममेति मां यदवदस्तत्केत्यसूयाकुलां
छाया सुभ्रु तवेयमित्यवतु वः श्लिष्यन्मुरारिः श्रियम्॥ १॥

कौस्तुभकान्तिपूरलहरीषु लीलाविहारेऽतुलो निबिड आनन्दो यस्या ईदृशी मेघाभे त्वदुरसि हे नन्दसूनो का नन्दति। 'त्वं मम हृदय एवासि' इति यदुक्तवान्, तर्हि 'इयं का' इत्यसूयाव्याप्तां लक्ष्मीं प्रति 'हे सुभ्रु तवायं प्रतिबिम्बः' इत्युक्त्वालिङ्गनं कुर्वन् मुरारिर्वो युष्मानवतु पातु॥

विश्वासो वनितासु मन्दमतिभिर्मैत्री मृषा भाषणं
भेदो भर्गमधुद्विषोः करुणया मुक्ता क्रिया वा वरम्।

अत्तं हालहलं कलङ्ककलना कष्टं कलिर्वोत्तमै-
र्ये गोविन्दपदारविन्दविमुखाः संभाषणं तैर्न तु ॥ २ ॥

वरमेतानि कार्याणि, परं हरिपदविमुखैः सह संभाषणं न तु। तानि कानि कार्याणी-त्याह—श्रीषु विश्वासः, मन्दबुद्धिभिर्नरैर्मैत्री, मिथ्यावचनम्, हरिहरयोर्भेदः, दयाहीना क्रिया निर्दयं कर्म, हालहलं विषमत्तं भक्षितम्, कलङ्कार्पणमन्यस्य, उत्तमैः सार्धं कलहः। एतेभ्योऽपि हरिविमुखसंभाषणमधर्ममित्यर्थः॥

या वेला याति जन्तोर्जगति जलधरश्याम लोकाभिराम
श्रीराम ध्यानपूजाप्रणतिनुतिमहामङ्गलश्रीभिरिभ्या।
आयुः सा सर्वकामैरभिमतमतुलं स्वर्गसौख्यं च सैव
ब्रह्म त्वं सा तदन्या मृतिनरकततिप्राप्तिगर्भार्तिहेतुः ॥ ३ ॥

हे मेघश्याम, लोकानन्दकर श्रीराम, सा ध्यानपूजानतिस्तुतिरूपमहामङ्गलशोभाभिरिभ्या आढ्या या वेला जन्तोर्याति। 'इभ्य आढ्यो धनी स्वामी' इत्यमरः। सैवायुर्जीवनम्, सर्वाभीष्टयुतं स्वर्गसुखमपि सैव वेला, ब्रह्मत्वं सैव, तदन्या हरिध्यानादिशून्या वेला मरणनरकश्रेणीपातगर्भदुःखानां हेतुः कारणम्॥

श्रीरामाय नमो नमो नम इति व्याहृत्य हत्यायुता-
न्मुच्यन्ते मनुजा न जातु जठरं मातुर्विशन्ति क्वचित्।
मन्त्रोऽयं मधुराक्षरः स्फुरतु मे जिह्वाञ्चले निश्चलो
येनामी निगडा गलन्ति सहसा संसारसंबन्धिनः ॥ ४ ॥

मनुष्याः 'श्रीरामाय नमः' इत्युच्चार्य ब्रह्महत्यादिपापौघान्मुच्यन्ते, जननीजठरं च कदाचिन्न विशन्ति। मधुरवर्णोऽयं मन्त्रो मे जिह्वाञ्चले स्थितः स्फुरतु। येन मन्त्रेणामी सशृङ्खलाः सहसा गलन्ति निवर्तन्ते॥

सानन्दं सुन्दरीभिः सममरपुरोपान्तकान्तारवेल्ल-
न्मल्लीवल्लीमतल्लीप्रचुरपरिमलप्रीयमाणालिवृन्दैः।
उद्गीतस्फीतशीतद्युतिसदृशयशा यच्चिरं भाति यज्ञैः
क्वैतत्कानन्तसेवाफलमहह कुतः कल्पवृक्षः क्व तालः ॥ ५ ॥

एतादृशो नरो यज्ञैरश्वमेधादिभिः कृत्वा सुन्दरीभिः सार्धं सानन्दं यच्चिरं शोभते। एतत्क। हरिसेवाफलं मोक्षाख्यं क। द्वौ महदन्तरे। मोक्षापेक्षया स्वर्गफलं तुच्छमित्यर्थः। कीदृशः। अमरपुरं स्वर्गस्तत्समीपे कान्तारं वनं तत्र वेल्लन्त्यः प्रसरन्त्यो या मल्लिवल्लीमतल्ल्यः मल्लिकालताश्रेष्ठाः। 'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ' इत्यमरः। तासां

१. जग्धादेशस्य वैकल्पिकत्वाभावात् 'अत्तम्' इति कस्य रूपमिति चिन्तनीयम्.

प्रचुरो यः परिमलस्तेन प्रीयमाणानि यान्यलिवृन्दानि भ्रमरसमूहास्तैरुद्गीतं स्फीतं चन्द्रसदृशं यशो यस्यैतादृशः सन्। दृष्टान्तमाह—पारिजातः कल्पवृक्षः। कुतः। तालश्च क्व। यथा पारिजाततालयोरन्तरम्, तादृशं मोक्षस्वर्गयोरित्यर्थः॥

जन्तो दीन भवाध्वनीन बहुना भारेण किं कर्मणां
खिन्नः किं न करोषि कर्णकुहरे किंचिद्वरेण्यं वचः।
विश्रामं कुरु रामचन्द्रचरणच्छायास्वनायासतो
यत्रत्या भविनो विनोदवशतो विन्दन्ति वाञ्छाधिकम्॥ ६॥

हे भवाध्वनीन। अध्वनि गच्छतीति 'अध्वनो यत्खौ' इति खः। हे संसारपान्थ। हे दीन जन्तो, कर्मणां नित्यनैमित्तिककाम्यानां भारेण किं खिन्नः श्रान्तोऽसि। किंचिच्छ्रेष्ठं वचनं कर्णविवरे किं न करोषि। किं वच इत्याह—हरिपदच्छायासु विश्रान्तिं कुरु। यत्रत्या हरिचरणस्था जन्तवो विनोदवशेनैवायासं विना वाञ्छाधिकं लभन्ते॥

हर्षं चेत्कुरुषे सखे तदविता विष्णुर्ममेति ध्रुवं
कुर्वीथा यदि रोषमेष तदरिः संसार एकस्तव।
लोभश्चेतसि चेत्तदर्पय धनं सत्पात्रभूते द्विजे-
ऽहंकारस्तु तवायमेव घटते यत्सर्वमेवास्म्यहम्॥ ७॥

कामादयो यद्यपि निषिद्धाः, तथापि तव कर्तव्याश्चेत्, तर्हि तेषां करणे स्थानमाह—हे सखे, चेद्धर्षं कामं कुरुषे तर्हि 'हरिर्मम रक्षिता' इति कामं कुरु। यदि रोषं कुरुषे चेत्, तर्हि एक एष संसारस्तवारिः, तत्रैव कार्यः। तव चित्ते लोभश्चेत्, तर्हि सत्पात्रभूते विद्याचारयुते विप्रे धनं देहि। तवाहंकारस्त्वयमेव घटते यत्सर्वमहमेवास्मि। 'सर्वं खल्विदं ब्रह्म' इति श्रुतेः॥

ये वर्णा व्यवहारमार्गविविधव्यापारवन्तः सदा
किं तैः संसृतिजालविस्तृतिकृते तन्तुत्वमभ्यागतैः।
जिह्वे जल्प निरन्तरं भगवते नारायणायों नमो
याताः पातकिनोऽपि यैः परपदं यत्तद्गुणागोचरम्॥ ८॥

संसारमार्गे नानाव्यवहारोपयोगीनि यान्यक्षराणि संसाररूपजालस्य विस्तारार्थं तन्तुत्वं प्राप्तैस्तैरक्षरैस्तव किम्। मिथ्यावर्णोच्चारो न कार्य इति भावः। हे जिह्वे, नित्यं 'ॐ नमो भगवते नारायणाय' इति वर्णान्नित्यं वद। यैर्नारायणनामवर्णैः पातकवन्तोऽपि जना यद्गुणातीतं परपदं ब्रह्मपदं तद्याताः प्राप्ताः॥

यावत्संसारदावानलबहुलबलोत्तालकीलाकराल-
प्राग्भारस्फारतापादतनुतरभवद्वेदनाभेदनाभिः।

काय: पञ्चत्वमायात्ययमहह न ते वीजदैवैकवश्य-
स्तावन्नारायणस्य श्रय सुरसरितासेवितं पादपद्मम् ॥ ९ ॥

अहहेत्यद्भुते। हे जीव, दैवस्य प्राक्कर्मण एकोऽत्यन्तं वश्यो वशवर्ती। अयं ते तव कायो देहो यावत्पञ्चत्वं मृतिं नाप्नोति, तावद्गङ्गया सेवितं हरेः पादकमलं त्वमाश्रय सेवस्व। देहस्य पञ्चत्वं कुतः। तत्र हेतुमाह—संसार एव दावाग्निस्तस्याधिकसामर्थ्यादुत्तालाश्चञ्चला याः कीला ज्वालाः। 'वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम्' इत्यमरः। तासां करालो भयंकरो यः प्राग्भार उच्चैस्तरता तेन स्फारो बहुलो यस्तापस्तस्मादतनुतराश्चातिमहत्यो भवन्त्यो या वेदनास्ता एव भेदनास्ताभिः। संसारतापैर्यावन्न म्रियत इत्यर्थः॥

गोविन्दध्यानलीलालहरिपरिहृतानेकदुर्वारदोषाः
सन्तः स्वैरं चरन्तस्तृणमिव गणयन्त्येवमुच्चैर्भवाब्धिम्।
स्वामी वागःसमर्थो विमलतमधियाराधितः साधकाना-
मम्भोधिं वा हनूमाननुनयवचनं जानकीवात्मशत्रोः॥ १० ॥

हरेर्ध्यानरूपा या लीलास्तासां लहरिभिर्नाशिता अनेके दुर्वारा दोषाः कामक्रोधादयो येषामीदृशाः सन्तो विश्वामित्रादयः स्वैरं चरन्तः स्वेच्छाचरणशीला अयाज्ययाजनवेश्यागमनादि कुर्वन्तोऽपि संसारसमुद्रमुच्चैस्तृणमिव गणयन्ति मन्यन्ते। तत्र दृष्टान्तमाह—समर्थः स्वामी निष्कपटबुद्ध्या सेवितो भक्तानामागोऽपराधं यथा न गणयति। यथा हनूमान्समुद्रं नागणयत्। सीताशुद्ध्यर्थं गतः। सीता रावणस्य विनयवचनं यथा नागणयत्। तथा सतां संसार इत्यर्थः॥

लब्ध्वा पार्वणचन्द्रचारुचतुरं कंदर्पकाण्डाकुलः
कामिन्या वदनं करिष्यसि घनं मन्ये चिरं कूर्दनम्।
ख्यातिं क्षोणितले गमिष्यसि पुनः प्राप्याखिलं काङ्क्षितं
कालो न स्मृतिमेति किं कवलयन्नुत्तालजिह्वो जगत्॥ ११ ॥

हे जन्तो, पूर्णेन्दुरम्यं नार्या मुखं प्राप्य कामबाणातुरो निबिडं कूर्दनं खेलनं करिष्यसि निखिलमिष्टं पुनः प्राप्य लोके कीर्तिं च प्राप्स्यसीति अहं मन्ये। परं चञ्चलरसनो जगत् कवलयन्ग्रसमानः कालः किं तव स्मरणं नायाति। संसारसौख्येऽपि मरणमावश्यकमिति भावः॥

मुक्ताहारोऽपि पीनस्तनकलशलसत्स्वाङ्गभावान्न मुक्तो
मध्येवह्नि प्रविश्य श्रवणपथगता कर्णिका विभ्रमाय।

शब्दायेते पदस्थे अपि पतनभयान्नूपुरे कामिनीनां
संसर्गस्तन्न दत्ते बत कतरदहो देहभाजामसौख्यम् ॥ १२ ॥

मौक्तिकहारोऽपि पीनौ यौ स्तनकुम्भौ तयोरुल्लसच्छोभमानं स्वाङ्गं स्वस्वरूपं यस्य तस्य भावान्न मुक्तः । तत्र शोभत एव । अथ च श्लेषः—मुक्त आहारो येनेदृशस्त्यक्तान्नोऽपि न सङ्गमुक्तः । कर्णस्यालंकारः कर्णिका । 'कर्णललाटात्कन्नलंकारे' इति कन्प्रत्ययः । कर्णगता कर्णिका वह्नेर्मध्ये । 'पारेमध्ये षष्ठ्या वा' इति समासः । अग्निमध्ये प्रविश्यापि विभ्रमाय विलासाय भवति । वह्निप्रवेशेऽपि भ्रमो न गतः । चरणस्थे अपि नूपुरे पतनभयाच्छब्दं कुरुतः । पदस्थस्यापि पातभयमस्त्येव । तत्तस्माद्देहिनां नारीसङ्गः कियद्दुःखं न ददाति । सर्वासुखहेतवो नार्य इति भावः ॥

को बिन्दुं मृगतृष्णिकासु पयसः प्राप्नोति यत्नाज्जनः
को वाभीषुभिरानमय्य शशिनं पीयूषमास्वादयेत् ।
संसारे सुखमेति कः सिकतया निष्पन्नपात्रोपमे
जाड्यं जीव जहीहि याहि शरणं श्रीकान्तमेकान्ततः ॥ १३ ॥

को जनो मृगतृष्णायां यत्नादपि जलकणमाप्नोति । को वा किरणैश्चन्द्रं नमयित्वामृतं पिबति । सिकताकृतपात्रतुल्ये संसारे को वा सुखमाप्नोति । एतत्त्रयं दुर्लभमित्यर्थः । हे जीव जन्तो, जाड्यं मूर्खत्वं त्यज । सततं हरिं शरणं गच्छ ॥

कायः कष्टनिकाय एष नरकद्वारं पुरन्ध्रीजनो
बन्धुः स्वार्थपरो नृपस्य पदवी कारुण्यलेशोज्झिता ।
वित्तं विद्युदिवास्थिरं विवदिषा वेदे वितण्डावती
तत्संसारसमुद्रसारमितरत्किं कृष्णसेवामृतात् ॥ १४ ॥

एष देहो दुःखानां गृहम्, स्त्रीजनो निरयद्वारं तत्प्रापकत्वात् । स्वजनस्तु स्वार्थसाधको न तु परोपकारी, नृपपदमपि निर्दयम्, द्रव्यं तडिच्चलम्, वेदे विवदिषा वक्तुमिच्छा । 'विविदिषा' इति पाठे जिज्ञासा । वितण्डावती वादस्यास्पदम् । तस्माद्धरिसेवारूपामृतादन्यत्संसाराब्धौ किं सारम् । न किमपि । हरिसेवनमेव सारमित्यर्थः ॥

तृष्णावारि न वारि नान्नमशितं क्षुद्व्याधिविच्छित्तये
योग्यामातनुते निरन्तरमियं निद्रात्मदैर्घ्यैषिणी ।
मारो मूर्छति निर्दयं नरमधोदेशं नयन्मैरवं
किं मानं वद जीवितव्यविषये विष्णोर्विहायार्चनम् ॥ १५ ॥

वारि जलं तृष्णां वारयति तृष्णावारि तृष्णानिवर्तकं न भवति । अन्नमपि भक्षितं सत्क्षुधारूपव्याधेर्नाशकं न । दिनान्तरे क्षुधोदयात् । निद्रा स्वस्य दैर्घ्यमिच्छती सती नि-

मेषमिषेणाभ्यासं करोति । जनं भयंकरमधोदेशं नरकरूपं प्रापयन्मारः कामो वर्धते । ततो वद हरेः पूजां विना जीवितं किं सारम् । हरिपूजनमेवेत्यर्थः ॥

कंसारातिसुरातिसेवितपदध्यानप्रमोदक्षणं
हित्वाराधकबाधकव्यधविधौ लोकत्रये दक्षिणम् ।
कः सारामितरः करिष्यति विशामाशाभृशावर्तव-
त्संसाराब्धिसमर्थमारमकरग्रासीकृतानामिह ॥ १६ ॥

कंसशत्रोर्हरेः सुरैर्देवैरत्यन्तं सेवितं यत्पदं तस्य ध्यानेन यः प्रमोदोत्सवस्तं त्यक्त्वान्यः को विशां नृणां सारां समाधानं संभालनं करिष्यति । न कोऽपि । कीदृशानां विशाम् । आशा तृष्णैव भृशोऽत्यर्थं आवर्तो जलभ्रमो यत्रेदृशो यः संसारसमुद्रस्तत्र समर्थो यो मारः काम एव मकरस्तेन ग्रासीकृतानां भक्षितानाम् । कामाकुलानामित्यर्थः । ध्यानप्रमोदक्षणं कीदृशम् । त्रैलोक्ये आराधकानां सेवकानां ये बाधकाः कामादयस्तेषां व्यधो नाशस्तद्विधौ नाशकरणे दक्षिणं कुशलं समर्थमित्यर्थः । हरिध्यानमेव कामादिशमकमिति भावः ॥

भूयाद्भूधर भक्तिरेव भवतः पादाम्बुजे भूयसी
यामाश्रित्य यमं न मन्दमतिरप्यालोकते कुत्रचित् ।
दीव्यत्संसृतिदावपावकपयोवाहप्रवर्षत्ततिः
पीयूषादपि पेयपावनरसा लभ्या सदभ्यासतः ॥ १७ ॥

हे भूधर, तव पादाब्जे भूयसी बह्वी भक्तिर्मे भूयात् । मन्दबुद्धिरपि यां भक्तिमाश्रित्य कदापि यमं न पश्यति । कीदृशी भक्तिः । दीव्यन्प्रसरन्यः संसार एव दावाग्निस्तत्र मेघस्य प्रवर्षन्ती ततिः श्रेणी । तन्नाशिकेत्यर्थः । अमृतादपि पातुं योग्यः पावनः पवित्रो रसो यस्याः । अमृतादपि स्वादीयसीत्यर्थः । तथा सता श्रेष्ठेनाभ्यासेन प्राप्या ॥

संसाराह्वयदावपावकलसल्लोभादिकीलावली-
दाहव्याहतदेहिदौःस्थ्यदलने यज्जायु वीर्योत्तरम् ।
पीयूषादतिरिच्यतां मम मुखव्याकोशपद्माशये
तद्गङ्गादिगरिष्ठतीर्थगुरु ते गोविन्द पादोदकम् ॥ १८ ॥

हे गोविन्द, तत्ते तव चरणोदकं मम मुखलक्षणे विकसितकमलमध्ये अमृतादप्यतिरिच्यताम् । अमृतादपि स्वादुतरमस्तु । तत्किम् । यत्पादोदकं संसाररूपदवाग्नेर्लसन्त्यो या लोभादिलक्षणा ज्वालापङ्क्तयस्तज्जनितदाहेन व्याहताः पीडिता ये देहिनस्तेषां दौःस्थ्यं दुःखं तद्दलने तन्नाशे वीर्योत्तरं बलवज्जायु औषधम् । संसारदावानलशमकमित्यर्थः ॥

संसृत्याह्वयवागुरैकविषये व्याधो हि कालाभिधो
मायाजालवशं विधाय बलवानह्नाय मामक्षिपत् ।
तत्रत्यातुलजन्तुजातिकलनोद्दामापदं मां दया-
सिन्धो माधव मोचयामितभयाद्दीनं धृताशं त्वयि ॥ १९ ॥

संसारलक्षणवागुराया मृगबन्धन्या एको विषयो देशः तत्र कालनामा बलवान् व्याधोऽह्नाय शीघ्रं मायालक्षणजालवशवर्तिनं मां कृत्वा अक्षिपत् क्षिप्तवान् । तत्रत्याः संसारवागुराविषयस्था अतुला बहवो या जन्तुजातयस्तासां कलनेन ग्रसनेन उद्दामा उत्कृष्टा आपत्पीडा यस्य तम् । अत एव दीनं त्वयि धृताशं कृताभिलाषं मां हे दयाब्धे माधव, अमितादसंख्याद्भयान्मोचय । संसृतिपथं निवर्तयेत्यर्थः ॥

मायाजालमिदं विचित्रमतुलं यस्मात्समुत्पद्यते
सूत्रं प्रत्युत संसृतिप्रसृतये यत्र स्थिता जन्तवः ।
नित्यं निर्व्यथनैर्निवारितदृशो यन्मध्यगैर्दृश्यते
विश्वाकारतया तदेव परमं ब्रह्म प्रकाशात्मकम् ॥ २० ॥

इदं मायाजालं विचित्रमाश्चर्यकारि । अतुलमनुपमं च । तदेवाह—यस्मान्मायाजालात् प्रत्युत वैपरीत्येन संसारप्रसाराय सूत्रं महत्तत्त्वमुत्पद्यते । 'प्रकृतेर्महान्' इत्यादिश्रुतेः । सूत्राज्जालं जायते । अत्र पुनर्जालात्सूत्रमिति वैपरीत्यम् । यत्र मायाजाले स्थिता जन्तवो निर्व्यथनैर्नितरां पीडनैर्निवारितदृशो नष्टज्ञाना वर्तन्ते । अथ 'रन्ध्रं निर्व्यथनं रोकम्' इत्यमरोक्तेर्निर्व्यथनं छिद्रं तेन वारितनेत्रा जना इत्याश्चर्यम् । छिद्रे तु पश्यन्ति । किंच, यन्मध्यगैर्यत्र मायाजाले स्थितैर्जनैः प्रकाशरूपं तद्ब्रह्म विश्वाकारतया संसाररूपत्वेन दृश्यते । 'सर्वं खल्विदं ब्रह्म' इत्युक्तेः ॥

मा दामोदर दाः कदाचन चिदानन्दानुभावोत्सवा-
दन्यं मे समयं भयंकरभवव्याधिप्रधानौषधात् ।
कस्ते पादसरोजसेवनसुधासुस्वादसंतुष्टहृ-
त्सौख्ये संसृतिसंभवे सुमतिमान्संजायते सस्पृहः ॥ २१ ॥

हे दामोदर, कदाचिदपि चिदानन्दस्य योऽनुभावस्तज्जनितादुत्सवादन्यं समयं क्षणं मे मह्यं मा दाः मा देहि । किंभूतात् । भीतिप्रदो यो भवव्याधिः संसाररोगस्तस्य प्रधानं श्रेष्ठमौषधं तद्रूपात् । अर्थान्तरमाह—ते तव पादपद्मसेवनमेव सुधा अमृतं तस्य शोभनस्वादेन संतुष्टं हृत् हृदयं यस्य एतादृशः को वा सुमतिमान् संसारोत्थसुखे साभिलाषो जायते ॥

सर्वाशासु समुन्नते जितवति प्रायेण तापत्रयं
श्रीरामे भवदावपावकघने निष्पङ्कजन्मस्थितौ।
अव्यक्ताक्षरमेव गर्जति भवेद्यासारमुक्तिस्तया
मा सीदन्तु सबीजयोगमरुतः सत्क्षेत्रिणोऽयं नयः॥ २२॥

संसारदावानलस्य घने मेघे संसारतापशमके श्रीरामे अस्पष्टाक्षरं गूढं यथा तथा गर्जति या सारा श्रेष्ठा मुक्तिर्भवेत्, तया सन्तः क्षेत्रिणो देहिनो मा सीदन्तु। अयं नयो नीतिः। कीदृशे रामे। सर्वदिक्षु समुन्नते प्रसिद्धे। आध्यात्मिकादितापत्रयं प्रायेण जितवति तापनाशके। निष्पङ्कं निष्पापं जन्म येषां तत्र स्थितिर्यस्य तस्मिन्। अर्थान्तरध्वनिः—सर्वदिक्षून्नते तापनाशके निश्चिता पङ्कस्य जन्म स्थितिश्च यत्र। गूढं गर्जति मेघे या आसारस्य वेगवृष्टेर्मुक्तिर्भवेत्, तया क्षेत्रवन्तो न सीदन्ति। कीदृशा देहिनः क्षेत्रिणश्च। सबीजयोगमरुतः। साकारध्यानयुक्तो योगः सबीजयोगः, तत्र मरुत् प्राणायामो येषां ते। बीजं व्रीह्यादि तद्योगेन मरुता अनुकूलवायुना च सह वर्तमानाः। 'पङ्कोऽघे कर्दमेऽपि च।' 'बीजं तु रेतसि। स्यादाधाने च तत्त्वे च हेतावङ्कुरकारणे॥' [इति हैमः।] 'क्षेत्रं भरतादौ भगाङ्कयोः। केदारे सिद्धभूपत्न्योः' इति कोषः॥

चित्रं त्वेतदलब्धबीजविवशा योगेन हीनाः सदा
येषां साधयितुं समीहितमभून्नैवानुकूलोऽनिलः।
क्षेत्रं वीतवृषोदयं बहुतृणं संप्राप्य संकर्षणाः
साम्यं ते समवाप्नुवन्ति फलतः श्रीरामनामग्रहात्॥ २३॥

एवंविधा अपि नराः श्रीरामनामग्रहणमात्रेण सम्यक्कर्षणं शरीरशोषणं कृषिश्च येषां ते फलतः फलेन सादृश्यं यान्तीत्येतच्चित्रम्। कीदृशाः। अलब्धं यद्बीजं सबीजयोगध्यानं च तेन विह्वलाः। योगेन योगाङ्गेन यमादिना उपायेन, हलादिसामग्र्या च हीनाः। किंच, येषां समीहितमिष्टं साधयितुमनुकूलो वायुः प्राणायामो बाह्यवायुश्च नाभूत्। किं कृत्वा। वीतो नष्टो वृषोदयो धर्मोदयो वृष्ट्युदयश्च यस्मात्। बहुतृणं तृणादप्यूनं तुच्छम्। तृणात् '(विभाषा बहुच्) परस्तात्तु' इति बहुच्। बहूनि तृणानि यत्र ईदृशं क्षेत्रं स्थानं च प्राप्य॥

रे संसारपयोद पुण्यतरणिं प्रच्छाद्य पङ्कोत्तरा
वृष्टिर्वैषयिकैः रसैरविरतं सन्मार्गरोधाय ते।
किं च स्त्रैणकटाक्षलक्षणतडिज्झंकारतः केशवा-
सक्तान्भीषयसे श्रुतस्तव न किं तत्तार्क्ष्यपक्षानिलः॥ २४॥

रे संसारमेघ, पुण्यतरणिं धर्मलक्षणं सूर्यं प्रच्छाद्य वैषयिकैर्विषयसंबन्धिभी रसैर्विषयास्वादैः पङ्कं पापमुत्तरमधिकं यस्याः सा । तव वृष्टिः सन्मार्गस्य रोधाय वारणाय भवति । किंच स्त्रीसंबन्धी कटाक्षरूपो विद्युतो झांकारस्तेन विष्णुभक्तान् यत्त्वं भीषयसे भयमुत्पादयसि, तत्किं तव तस्य हरेस्तार्क्ष्यो गरुडस्तत्पक्षवातो न श्रुतः । स त्वां निर्मूलं करिष्यतीत्यर्थः । वातस्य मेघनिराकरणक्षमत्वं प्रसिद्धम् ॥

तृष्णावल्लभ दम्भदोर्बल महामोहप्रविष्टास्पद-
क्रोधालस्यवयस्य लोभविभव भ्रान्तिव्रतैकादर ।
संकल्पात्मक मर्म तेऽस्ति विदितं संसार किंचित्परं
यन्नारायणनाममात्रचकितो भूयो न भावी भवान् ॥ २५ ॥

तृष्णा वल्लभा यस्य । दम्भ एव बाहुबलं यस्य । महामोहस्थितावास्पदं यस्य । कोपालस्ये मित्रे यस्य । लोभ एव विभवः समृद्धिर्यस्य । भ्रान्तिर्व्रतरूप एक आदरो यस्य । संकल्प एव आत्मा स्वरूपं यस्य । हे संसार, तव किंचित्परमुत्कृष्टं मर्म विदितमस्ति । यद्धरिनाममात्रभीतो भवान्न पुनर्भविष्यति ॥

लोलत्वं न जहाति हन्त कमला कौमारमुख्यं वयो
विद्युद्दर्शनकल्पमल्पदिवसा नैव स्थितिः स्वैः सह ।
या जागर्ति विदन्निदं न मनुजः संकल्पशय्यां गतः
संसाराह्वयवैरिणो विलसितं सर्वं तदेतद्ध्रुवम् ॥ २६ ॥

हन्तेति खेदे । लक्ष्मीश्चाञ्चल्यं न त्यजति । बाल्यादिवयस्तु विद्युद्दर्शनतुल्यम् । अतिचञ्चलमित्यर्थः । बन्धुभिः सहावस्थानं स्वल्पकालावस्थायि । मनुष्य इदं लक्ष्म्यादिचाञ्चल्यं जानन्नपि यन्न जागर्ति । मनोरथरूपशय्यां गतः सन् पारलौकिकं न करोति । निश्चितमेतत्सर्वं संसारलक्षणशत्रोर्विलसितम् । संसारप्रताप इत्यर्थः ॥

रे संसारसमुद्र मुद्रय मुखं मा गर्ज लोलैर्जलै-
र्गण्डूषग्रहिलो ग्रहीष्यति मुनिस्त्वां कुम्भकात्संभवन् ।
ब्रह्मण्यः स यमी घनाम्बुगरलप्रायः प्रवीणः प्रभु-
स्ताराकारधरः समस्तजगतामानन्दहेतूदयः ॥ २७ ॥

रे संसारार्णव, मुखं मुद्रय, चञ्चलैर्जलैर्मा गर्ज । ब्रह्मण्यो ब्रह्मप्रतिपादकः । यमी नियमयुक्तः । [घनाम्बु] मेघजलं निबिडपानीयं तदेव विषं तन्नाशचतुरः । तारस्य प्रणवस्य आकारधारी, बिन्दुरूपो वा । सर्वलोकानामानन्दकारणीभूत उदयो यस्यैतादृशः । कुम्भकात्प्राणायामभेदादुत्पन्नः । मुनिर्मननशीलः । ज्ञानरूपो हे ग्रहिल आग्रहवांस्त्वां ग्रहीष्यति यास्यति ॥

प्रायो य[त्परिचर्य]यैति विलयं दोषोऽखिलः संचितः
सर्वोपद्रवशान्तिरस्ति चरिते यस्य श्रुते विश्रुते ।
यन्नामैव महौषधं त्रिभुवने पथ्यं पयः पादयोः
संसारामय रामचन्द्रचरणप्रह्वे भवेत्किं व्यथा ॥ २८ ॥

हे संसाररोग, हरिपादनम्रे नरे तव किं भवेत् । तमेव हरिं वर्णयति—यत्सेवया संचितः सर्वो दोषः प्रायो नाशमाप्नोति । विश्रुते यस्य चरिते रावणवधादिके श्रुते सति सर्वेषामुपद्रवाणां नाशोऽस्ति भवति । त्रैलोक्ये यन्नामैव रामेत्यादिकं रोगौषधम् । यत्पादोदकं पथ्यं हितम् । ईदृशे रामभक्ते त्वमकिंचित्करः ॥

सारं सर्वगिरां सदा दिशति यज्जन्तोरसव्यश्रुतौ
काश्यां कालजिघृक्षितस्य करुणाकल्लोलमाली मृडः ।
पीतं पुण्यवशाद्दशाननरिपो रामेति नामामृतं
येनासावमृती भयंकरभवाम्भोधेर्भयं तस्य किम् ॥ २९ ॥

रावणशत्रो रामेतिनामरूपममृतं येन पुण्यवशात्पीतम्, असौ अमृती मोक्षाधिकारी । तस्य भयंकरात्संसारसमुद्रात्किं भयम् । न किमपीत्यर्थः । तदेवाह—दयासमुद्रो हरः काश्यां कालेन गृहीतुमिष्टस्य मुमूर्षोर्जनस्य दक्षिणकर्णे सर्ववाणीनां सारभूतं सदा यद्रामनामोपदिशति ॥

रोष त्वं दोषपोषोन्मुख विषयजुषो यन्निगृह्णासि तद्व-
न्मैव श्रीवत्सलक्ष्मोपचरणचतुराञ्जीगणो जातु जन्तून् ।
क्षेमं रामं नमन्तः कति तु कृतिविदामुत्तमं मन्तुमन्तो
धाम व्याधामपाणिप्रमुखमखभुजां भेजुरुद्भासिताशाः ॥ ३० ॥

हे रोष, हे दोषस्य वृद्धावुन्मुख, विषयसेवापरांस्त्वं यद्वत्पीडसि, तद्वद्धरेरुपचरणं सेवा तत्परान्नरान्माजीगणः मा गणय । गणयतेर्लुङि मध्यम[पुरुषै]कवचनम् । 'नाग्लोपिशास्वृदिताम्' इत्यस्य गणयतेर्विकल्पितत्वाच्चङ्कार्यम् । मन्तुमन्तः सापराधा अपि जनाः कृतज्ञानां श्रेष्ठमिमं हरिं नमन्तः कतीन्द्रादिदेवलोकान्न प्राप्ताः । कीदृशाः । उद्भासिता दिशो यैः । व्याधाम वज्रं पाणौ यस्य व्याधामपाणिरिन्द्रः । 'व्याधामोऽपि' इति वज्रनामसु क्षीरस्वामी ॥

दानं नानन्दहेतुर्भवति महदहो दत्तमप्युत्तमेभ्यो
यागो वा गोहयादिर्गलितफलतया नर्म निर्माति नोच्चैः ।
धर्मः शर्मैकभूमिर्न विलयमयते कोऽत्र यस्य प्रसङ्गा-
द्दम्भो दम्भोलिकल्पः स्पृशति कथामिवाधोक्षजध्यानधन्यान् ॥ ३१ ॥

दानमिति । पात्रेभ्यो दत्तं महदपि तुलापुरुषादिकं दानं सुखकारणं न भवति । गोमेधादिमार्गोऽपि अधिकसुखं न करोति । कुतः । गलितफलतया । क्षीणफलत्वेन दानयागादिफलं भुक्तं क्षीयत इत्यर्थः । यस्य हरेः प्रसङ्गाद्धरिसेवातः शर्मणः सुखस्य एका असाधारणी भूमिः स्थानभूतो धर्मो न नाशं प्राप्नोति । तस्य हरेर्ध्याने एकनिष्ठान्ध्यानपरान्को दम्भाद्यधर्मसंबन्धः कथमभिभवति । नाभिभवतीत्यर्थः ॥

भवतिमिर किमेतन्मेदुरं ते दुरन्तं
　　प्रसरति परितोऽङ्गं पीडयत्साधुलोकान् ।
हरितरणिरुदेति ग्रस्तमायातमिस्रो
　　रचयति न पुरा त्वां किं कथाशेषमेषः ॥ ३२ ॥

हे संसाररूपान्धकार, मेदुरं बहुलं दुरन्तं दुष्टावसानं साधुजनान्पीडयत्ते तवैतदङ्गं किं प्रसरति । न प्रसारणीयमित्यर्थः । यतो हरिरेव सूर्य उदयं याति । ग्रस्तं मायारूपं तमो येन । एष हरिमिहिरः । 'मिहिरारुणपूषणः' इति कोषः । त्वां कथैव शेषो यस्य तादृशं किं न पुरा रचयति । न रचयिष्यतीत्यर्थः ॥

भवभुजग जगन्ति व्याकुलीकृत्य दर्पा-
　　दयि दशसि दशास्यारातिसेवारतान्यत् ।
विषयविषयुताशीःखण्डनेऽतिप्रचण्डा-
　　त्किमु पतगपतेस्ते कोऽपि गोपायितास्ते ॥ ३३ ॥

हे संसारसर्प, गर्वाज्जगन्ति व्याकुलानि कृत्वा यद्दशास्यो दशमुखस्तदराती रामस्तत्सेवापरायणांस्त्वं दशसि ग्रससे । तत्किं पतगानां पक्षिणां पत्युर्गरुडाद्गोपायिता रक्षिता कोऽपि तव वर्तते । कीदृशात् । विषया एव विषं तद्युक्ता आशीर्दंष्ट्रा तत्खण्डनेऽतिसमर्थात् ॥

भवदव तव दग्धुं नौचिती विष्णुभक्तां-
　　श्चरितमतुलमेतत्किं न याति स्मृतिं ते ।
यदयमपिबदग्निं गोकुलग्रासगृध्नुं
　　भवति सह महद्भिः श्रेयसे किं विरोधः ॥ ३४ ॥

हे संसारदावाग्ने, हरिभक्तान्दग्धुं तवौचिता योग्यता नास्ति । एतदतुलं हरेश्चरितं किं तव स्मरणं नाप्नोति । यदयं हरिर्गोकुलदाहे साभिलाषं दवाग्निं [अपिबत् । अशमयदिति भावः] ॥

आसीत्स्यमन्तकमणेर्हलहेतिचेतः[1]
　　कृष्णेऽतिकोपकठिनं कुहनाविहीने ।

---

१. श्लोकोऽयं कुत्रचित्प्रकृतस्तबकावसाने दृश्यते.

सीतापि भर्तुरभवद्घनदुःखहेतुः
संसारसागररसा गरलोपमानाः ॥ ३५ ॥

हलं हेतिरायुधं यस्य तस्य बलभद्रस्य चित्तं निष्कपटेऽपि कृष्णे स्यमन्तकमणेर्हेतोः कोपेन कठिनमभूत् । [कथंभूते कृष्णे । कुहुनाविहीने छलरहिते ।] "शतधन्वा मणिं गृहीत्वा पलायित इति श्रुत्वा तं हन्तुं गतौ बलकृष्णौ ततो हयं पतितं विलोक्य बलमवस्थाप्य गतेन हरिणा तं हत्वा 'मणिर्नास्ति तत्र' इत्युक्ते मणिः कृष्णेन निह्नुत इति मत्वा बलः क्रुद्धोऽभूत्" इति कथा । सीतापि रामस्य निबिडदुःखदायिन्यभूत् । अत एव संसाराब्धिरसाः केचन कामिनीरूपा विषतुल्याः । यैर्हरयेऽपि दुःखमदायीति भावः ॥

भाति श्रीतुलसि प्रसिद्धमहिमा तेऽयं विधेयं विधे-
र्यत्स्वीयं न करोषि दासमसकृत्कर्तारमप्यंहसाम् ।
यत्पत्रे पुरुषोत्तमप्रभृतयो देवा निवासोत्सवा-
स्तस्यायुक्तमिदं तदम्ब नय मां पारं भवाम्भोनिधेः ॥ ३६ ॥

तुलसीं प्रार्थयते—हे श्रीतुलसि, अयं तव प्रसिद्धो महिमा भाति । कः । असकृत् अनेकवारं पापानां कर्तारमपि स्वीयं निजं दासं यद्विधेर्दैवस्य विधेयं वशं न करोषि । पापोऽपि त्वद्भक्तस्त्वयोद्ध्रियत इति प्रसिद्धार्चाकीर्तिरित्यर्थः । यस्यास्तव पत्रे हर्यादयो देवा निवासनिरताः । तस्यास्तवेदमेव युक्तम् । तत्तस्माद् हे अम्ब, मामपि संसाराम्बुधेः पारं नय प्रापय ॥

चक्षुर्मैव दिदृक्षु भूः परवधूवक्षोजपद्मप्रभां
कर्णाकर्णय कौतुकादपि वचो मावर्णवादात्मकम् ।
जिह्वे जल्प यथातथं विरमयाप्यक्षं परं पातका-
न्मच्चित्तेऽखिलदुष्टदर्पदलनो दामोदरो दीव्यति ॥ ३७ ॥

इति श्रीपुरुषोत्तमकृतायां विष्णुभक्तिकल्पलतायां संसारतिरस्करणो नाम सप्तमः स्तबकः॥

हे चक्षुर्नेत्र, परस्त्रीस्तनपद्मकान्ति द्रष्टुमिच्छु मैव भूः मा पश्य । हे कर्ण, अवर्णवादात्मकम्, अपवादवचनरूपं वा कौतुकादपि मा शृणु । हे जिह्वे, सत्यं वद । परमप्यक्षमिन्द्रियं घ्राणकरादिकं पापान्निवर्तय । यतः सर्वेषां दुष्टानां दर्पनाशको हरिर्मम मनसि क्रीडति ॥

इति श्रीमहीधरविरचिते विष्णुभक्तिकल्पलताविवरणे संसारतिरस्कारो नाम सप्तमः स्तबकः ॥

---

अष्टमः स्तबकः ।

संप्रति ध्यानं वक्तुं मङ्गलमाचरति—

गोप्यः कोऽप्ययमद्भुतः सुतपसो नन्दस्य सूनुः स्वयं
शंभुर्वा कमलासनः सुरशिरोरत्नं रमेशोऽपि वा ।

संलापामृतपूर्णकर्णकुहरामेवं व्रजस्त्रीजनै-
र्गाढानन्दमयीं पयोऽर्थमवतु श्लिष्यन्यशोदां हरिः ॥ १ ॥

हे गोप्यः, शोभनतपोयुक्तस्य नन्दस्यायं पुत्रः कोऽप्यद्भुतः शिवो ब्रह्मा देवशिरोमणि-र्हरिर्वा, एवं गोपीजनैः संलापामृतेन पूरितं कर्णविवरं यस्यास्ताम् । अत एव निबिडहर्षव्याप्तां यशोदां स्तनपानार्थमालिङ्गन्हरिर्वः पातु ॥

पात्रं हृत्कमलं मुरारिचरणद्वन्द्वैकसेवामृतं
स्नेहोऽनन्तनितान्तनिर्मलगुणैरुद्दामशोभा दशा ।
अन्तर्यामितया प्रतीतममलं ज्योतिः किमप्यद्भुतं
मायाकज्जलरेख एष भवताद्दीपो भवध्वान्तभित् ॥ २ ॥

एष परमात्मरूपो दीपो वो युष्माकं संसारान्धकारभिद्भवतु । दीपसामग्रीमाह—हृत्पद्मं पात्रम् । हरिचरणयुगलभक्तिलक्षणममृतं स्नेहस्थानीयम् । हरेरत्यन्तनिर्मला ये गुणा ऐश्वर्यादयस्तैरुत्कृष्टशोभायुक्ता दशा वर्तिः । अन्तर्यामिस्वरूपेण प्रसिद्धं निर्मलाश्चर्यकारि ज्योतिर्दीपप्रभास्थानीयम् । किंभूतो दीपः । मायैव अञ्जनरेखा यस्य ॥

आयुर्नीरमिदं निमेषमिषतः कालेन पेपीयते
पश्य प्राश्य जगन्ति विश्वविरमेऽविच्छिन्नतृष्णावता ।
प्राणस्तद्भयविह्वलः प्रियतया देहस्य चायं पुन-
र्यातायातपरस्तदत्र कतरत्कृष्णादुपायान्तरम् ॥ ३ ॥

जगन्ति प्राश्य विश्वं संहृत्य विश्वनाशेऽपि अविच्छिन्नतृष्णायुक्तेन कालेन निमेषमिषादायुर्लक्षणं जलं पेपीयते । पातेर्यङ् । तस्मात्कालाद्भयेन व्याकुलः प्राणोऽयं देहस्य वल्लभतया यातायातपरो गमनागमनपरोऽस्ति । तत्तस्मादत्र संसारे कृष्णादन्यदुपायान्तरं सुखसाधनं कतरत् । किमस्ति । हरिं विनान्य उपायो नास्तीत्यर्थः ॥

यत्ते चित्ते विधत्ते हरिपरिचरणोपायमस्तव्यपायं
शास्त्रं साक्षात्समत्वप्रमदसमुदयप्राप्तये तद्धि विद्धि ।
लीलाकैलासशैलाश्रयविबुधवरप्राज्ञतायास्तु शेषं
संसारस्थित्यपेक्षापलपितपरमानन्दमर्थान्तराढ्यम् ॥ ४ ॥

'समः शत्रौ च मित्रे च तथा मानापमानयोः' इत्यादिना गीतोक्तं यत्समत्वं तेन यः प्रमदसमुदय आनन्दोदयस्तत्प्राप्तये शास्त्रं गीतोपनिषदादिवेदान्तशास्त्रं यत्ते यत्नवति । यती प्रयत्ने । चित्ते हरिसेवालक्षणमुपायम्, अस्तो व्यपायो विघ्नो यत्र निर्विघ्नं यथा तथा विधत्ते करोति, इति विद्धि जानीहि । आदौ मनोजयः, ततो हरिसेवा, ततः समत्वाप्तिः,

ततो ब्रह्मानन्द इति क्रमः । ततो लीलया कैलासः शैल आश्रयो यस्येदृशो यो विबुधवरो देवश्रेष्ठः शंकरस्तस्य, प्रज्ञास्यास्तीति प्राज्ञः, प्रज्ञ एव प्राज्ञ इति वा तस्य भावः प्राज्ञता ज्ञानं तस्याः शेषं तदन्यप्रतिपादकमर्थान्तरयुक्तं यच्छास्त्रं तत् । संसारस्थित्यपेक्षया अपलपित आच्छादितः परमानन्दो येनेदृशं बोध्यम् । हर्यन्यप्रतिपादकं शास्त्रं संसारप्रापकमित्यर्थः ॥

येनानेना विना स्यान्न विहितदुरितस्तीर्णचान्द्रायणादिः
प्रायश्चित्तोऽप्यथान्यो विविधवृषवशाद्वासवावासवासम् ।
संप्राप्य स्निग्धमुग्धाधरमधुररसास्वादसौहित्यहीनो
दीनो विभ्रंशमेति श्रयत तदनिशं दास्यमेवाच्युतस्य ॥ ५ ॥

द्विविधो जनः, पापी पुण्यवांश्च । तयोरपि हरिरेव शरणमित्याह—विहितं दुरितं गोवधादिपापं येन सः । कृतचान्द्रायणादिप्रायश्चित्तोऽपि येन हरिं विना अनेना निष्पापो न स्यात् । अन्यथा अन्यः पुण्यवान् विधिधर्मवशाद्वासवावासे स्वर्गे संस्थितिं प्राप्य स्निग्धः प्रीतिविषयो मुग्धः सुन्दरो योऽधरस्तस्य यो मधुररसस्तस्यास्वादेन यत्सौहित्यं तृप्तिस्तद्रहितोऽप्सरोभोगेन । तृप्त एव दीनः सन् पुण्यक्षये भ्रंशं पातं प्राप्नोति । तत्तस्मान्निरन्तरं हरेर्दास्यमेवाश्रयत । हरिसेवां विनात्यन्तिकसुखाभावात् ॥

स्फूर्जद्धूर्जटिमौलिशालिनलिनीकल्लोलवल्लोलता-
लीलाकौतुकमन्वभावि भवता साकं निजैरिन्द्रियैः ।
भूत्वा केवलमेव धाम्नि तदहो शुद्धे सुषुम्णान्तरे
मध्येहृत्कमलं सुखाय सुचिरं रे चित्त विश्रम्यताम् ॥ ६ ॥

रे चित्त, स्फूर्जति शोभमाने धूर्जटिमौलौ शिरसि शालिनी नलिनी गङ्गा तस्याः कल्लोलवद्रङ्गोर्मितुल्यं लोलतालीलाकौतुकं चाञ्चल्यक्रीडोत्सवो निजैरिन्द्रियैः सह भवता त्वया अन्वभावि अनुभूतम् । इन्द्रियाणि त्वं चातिचञ्चलमिति त्वयैवानुभूतम् । तत्तस्मात्केवलमिन्द्रियरहितो भूत्वा सुषुम्णानाडीमध्यवर्तमाने हृत्पद्ममध्ये शुद्धे धाम्नि ब्रह्मस्वरूपे चिरकालं सुखाय सुखं प्राप्तुं विश्रमः क्रियताम् ॥

धुन्या धर्मधुरीणयाध्वरभुजां वन्धूरया धारया
द्वारं तां दशमीं प्रविश्य वियतः प्रक्षाल्यमानं महत् ।
सर्वस्वं यदशेषतः श्रुतिगिरां ध्येयं यदेकं सतां
तद्ध्यात्वा सुमनस्तयार्चय चिरं चेतोऽच्युताख्यं महः ॥ ७ ॥

हे चेतः, तदच्युतरूपं महस्तेजः सुमनस्तया शोभनमनस्कत्वेन ध्यात्वा पूजय । चिरं सर्वदा । किं कृत्वा । दशमीं द्वारं ब्रह्मरन्ध्राख्यां सुषुम्णालक्षणां वा प्रविश्य । कीदृशं

